तथात्वे "पादं पुनरारभते" इत्यस्य वैयर्थ्यापत्तेः ककुप्पदं एव गोणं अङ्गोकृत्य उत्तरोद्देशेन ककुप्त्वविधानात्—तयोरेव ग्रथनेन ककुप्त्वसम्पादनम्। एवं वैदिकानां—बार्हतप्रागाथसमाख्या उत्तरायस्यै पङ्क्तिः पाठव उपपन्नो भवति, इवत्वोपपत्ति सामान्य विधित्वात् तथाऽनुपपन्नाऽपि न दुष्यति। प्रग्रथने च आद्यां बृहतीं सकृत् पठित्वा अस्या अन्त्यपादेन सह द्वितीयाया अर्द्धं च पठित्वा तदन्त्यपादेन सह तृतीयान्त्यावपठनरूपं बोध्यम्। तेन द्वितीया ककुप् अष्टाविंशत्यक्षरैव। आद्याया समविंशत्यक्षरत्वेऽपि अन्त्या-न्तरत्वान्न दोष. । ८ । २ । ६ ।

एवं वा॥ ज्योतिष्टोम एव माध्यन्दिनपवमाने "त्रिच्छन्दा आवापोमाध्यन्दिनः पवमानः पञ्चसाम" इति श्रुतं। तदर्थं विवरणानि च "गायत्रामहीयवे गायत्रे तृचे भवत रौरवयौधाजये-बार्हते तृचे* भवत औशनसमन्त्य त्रिष्टुप्स्वि"ति अत्र रौरवयौधा-जययोः† पूर्व्वा बृहती उत्तरा विष्टारपङ्क्तिः समाम्नाता। तदिह विशिष्येव बार्हते तृचे इति बार्हततृचाम्नानात् उत्तरे द्वे बृहती-च्छन्दस्के एव समानेतव्ये इति प्राप्ते—

नाऽत्र रौरवयौधाजययोर्हेशेन बार्हतविधिः योनिस्ताह्याः प्राप्तत्वात्। नाऽपि तृचाधिकरणत्वविधिः प्राप्तत्वादेव। नाऽपि बार्हततृचाधिकरणत्वविधिः विशिष्टस्याऽव्युत्पन्नत्वात्। अतएव न विशिष्टोद्देशेन सामद्वयविधिः। तृचोद्देशेन बृहतीच्छन्दस्कत्वविधिः

---

* तृचे भवत इति पाठान्तरम्।

† यौधाजययोरिति पाठान्तरम्।

प्रप्रथनेन इति सिद्धान्तः । प्रप्रथनं च रोरवादिवद्द्विरावृत्त्या बोध्यम् । एवञ्च पञ्चसु मासु आवृत्ता प्रगाथा आप्यन्त इति लिङ्गमुपपद्यते ।

तथाहि सत्यपि ब्रह्मसामस्तोत्रावान्तरप्रकरणे त्रय प्रगाथा न ब्राह्मणाच्छंसिस्तोत्रा अपितु बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतु याज्यप्रस्थाना इति वाक्यादवान्तरप्रकरणं बाधित्वा ज्योतिष्टोमात्मक प्रथमदिनस्थस्तोत्रान्तरेष्वेव निविशन्ते भाष्यकारलिखनात् ।

छन्दोगसूत्रानुसारात्तु चतुस्त्रिंशस्तोमकद्वितीयदिनस्य स्तोत्रान्तरेष्वेव । तत्राऽपि पवमाने रथन्तरस्य प्रगाथे । होतुः पृष्ठे बृहत । अच्छावाकस्य पृष्ठे कालेयस्य च बोध्यम् ।

एवमुक्तवचनादेव इन्द्रक्रतुप्रगाथेऽपि उत्तरस्मिन् सर्वस्मिन् पक्षेऽपि एतस्य ब्रह्मसामस्तोत्रस्थत्वेऽपि तत्राभीवर्त्तसामाभावात् अभीवर्त्तादन्यस्याम इति वचनाद्वा न विरुध्यते । अवशिष्टा शत प्रगाथास्तत्र शतस्यर्क्षौ भाष्यकारलिखनात् । प्रथमदिनीयब्रह्मसामस्तोत्रे । परन्तु भाष्यकारीय नौधसग्रहणं नौधसस्थानक ब्राह्मणाच्छंसिस्तोत्रोपलक्षणार्थम् ।

वस्तुतस्तस्य बृहत्सामकपृष्ठत्वेन अयेतस्यैव प्रसक्तौ नौधस प्रसक्त्यभावात् गवामयने अभीवर्त्तस्यैव ब्रह्मसामत्वेन विशिष्य विहितत्वाच्च । छन्दोगसूत्रानुसारात्तु द्वितीयदिनीयब्रह्मसामस्तोत्रे शतस्यर्क्ष प्रगाथो बोध्य । अवशिष्टा नवनवतिप्रगाथास्ते पञ्चसु मासेषु यावन्तोऽभिप्लवास्तेषां प्रतिषडह तृतीयदिनयज्ञे प्रतिमास विंशत्यहानि पञ्चसु मासेषु शत तेषु उत्तमवर्ज्जं नवनवतिप्रगाथा इन्द्रदेवत्या बृहतीच्छन्दस्काय समाप्यन्त । षडहतृतीयेषु उत्तमे

यौधाजययोः षड्बृहत्यः* औशनसमाम्नः त्रिस्रस्त्रिष्टुभः† होतुः पृष्ठे पञ्चबृहत्यो द्वादश ककुभः। विष्टुतिप्रकारे तथैवाऽऽम्नानेन त्र्यृचत्वं तावदरं आम्नामात्। मैत्रावरुणपृष्ठे अष्टदश गायत्त्राः ब्राह्मणाच्छंस्यच्छावाकपृष्ठयोरपि अष्टदश सप्तदश बृहत्यः एकैकद्वाभ्यासेनैव। एवं च पञ्चचत्वारिंशद्बृहत्यो मुख्याः एषां गायत्रीणां चतुर्विंशत्यक्षराणां त्रिपादानां मध्ये चतसृणां गायत्रीणां द्वादशभिरक्षरैः पादः सहिता द्वादश पूर्वोक्ता अष्टाविंशत्यक्षराः ककुभो द्वादश षट्त्रिंशदक्षरात्मिका बृहत्यो भवन्ति। तदेवं सप्तपञ्चाशद्बृहत्यः ता आसां† पञ्चा गायत्रीणां मध्ये अवशिष्टाभ्यां द्वाभ्यां सह सप्तदशभिर्गायत्रीभिरेकैकेन पादेन मिलिताः सप्तपञ्चाशद्बृहत्यः चतुश्चत्वारिंशदक्षरात्मिकाः सप्तपञ्चाशत्त्रिष्टुभो भवन्ति एवमाद्याभिस्तिसृभिः त्रिष्टुब्भिः षष्टिस्त्रिष्टुभः। तदेतल्लिङ्गं प्रथमपक्ष एवोपपद्यते। अन्यथा पवमाने अन्यासां बृहतीनां होतुः पृष्ठे च अन्यासां ककुभां दाशतयीभ्य, समानयने षष्टिसंख्यानुपपत्ते.। अथ हि न त्रिष्टुभो माध्यन्दिनं सवनमिति यथाश्रुतं सामानाधिकरण्ये उपपद्यते बाधात्। अतो जघन्यं माध्यन्दिनसवनपदमेव लक्षणामङ्गीकृत्य माध्यन्दिनसवनाङ्गभूता—याः सामवेदे समाम्नातास्ताः षष्टिरित्यर्थावगते दाशतयीभ्यः समानयने लिङ्गानुपपत्तिरित्युक्तम्।

‘ तल्लक्षणायाश्चावश्यकत्वे लाघवान्माध्यन्दिनसवनस्तोत्रीयाणां एव लक्षणा तत आम्नातानामपि तत्त्वोपपत्तेरुचितम्। ८। २।६।

---

* औशनससमानस्त्रिस्रः त्रिष्टुभ, इति पाठान्तरम्।

† एषामिति पाठान्तरं।

इति वचनेन तन्निरासात्। अतः पादप्रग्रथनमेवेति सिद्धं। इयञ्च लिङ्गानुपपत्तिर्भाष्यकारलिखनानुसारात् प्रकरणे एतावत् संख्याक-ऋक्पाठमङ्गीकृत्य। यदा "चतुःशतमैन्द्रावार्हताः प्रगाथा दाशतयीषु" इति कल्पसूत्रकारवचनात् दाशतयीभ्यः समानयनम्, तदा पूर्व्वपक्षिणोऽपि चतुःशत * तृचानामेव समानयनोपपत्तेः लिङ्गोपपत्तिरविकलैव इति प्रगाथपदादेव प्रग्रथनम्। ८। २। ६।

अर्थैकत्वात्॥ सामवेदशाखाभेदेन एकस्यैव स्वरसमूहात्मकस्य साम्नआरोहावरोहादिभेदेन प्रकारभेदा आम्नाताः। एकस्यैव रागस्य देशभेदेन प्रकारभेदवत्। तेषाञ्च प्रकाराणां एकगीत्यर्थत्वात् ब्रीहियवादिवद्विकल्प, सिद्ध एव प्रसङ्गात् स्मार्य्यते। ८। २. ७।

अर्थैकत्वात्॥ विकृतिविशेषे कानिचित् प्राकृतानि स्तोत्राणि विहितानि, तेषु च यूपावटस्तरणवर्हिन्यायेन † न प्राकृतानां रथन्तरादिसाम्नां ऋचां वा प्राप्तिः प्राकृतस्तोत्रविशेषेष्वेव तेषां निबद्धत्वात्। तत्प्रकरणे चेदं श्रुतं "यद्वचास्तुवते तदसुरा अन्ववायन् यत् साम्नास्तुवते तदसुरा नान्ववायन् तस्माद् य एवं विद्वान् साम्ना स्तुवीत" इति।

तत्र ऋक्शब्दोऽप्रगीतऋक्परः प्रगीतायाः सामविधिनैव प्राप्तेः। नहि ऋगाश्रयत्वं विना साम्नः स्तोत्रसाधनता सम्भवति। स्तोभानामर्थशून्यत्वेन तदाश्रितऋक्साम्नां गुणाभिधानरूपस्तोत्र-साध्यत्वासंभवात्। अतस्तत्र प्रगीताप्रगीतयोर्विकल्पेन स्तोत्र साधनता उत प्रगीताया एवेति चिन्तायाम् –

* चतु शत इति पाठान्तरम्।

† वर्हिन्यायेन इति क्वचित् पाठः।

च प्रग्रथनपूर्व्वकाभ्यासे सप्तबृहत्यश्चतुर्द्दश ककुभः। तत्र सप्त बृहत्यः पञ्च जगत्यः द्वादशाक्षराणि अवशिष्यन्ते। चतुर्द्दशानाञ्च ककुभां अष्टौ जगत्यः। अष्टौ* अष्टाक्षराण्येव अवशिष्यन्ते † तदेव चतुर्विंशति र्जगत्योऽवशिष्टाक्षरैश्च मिलितैरेका ककुप्।

तदिदं प्रग्रथनएवोपपद्यते, नतु यथाश्रुतगायत्रीपाठे अल्पा-क्षरत्वापत्तेः। तस्मादपि प्रग्रथनम्।

यत्तु भाष्यकारेण पूर्व्वपदन्ययोर्वाऽनुष्टुभोः समानयन् प्रग्रथनं वा इति चिन्तितम्। तत् पौनरुक्त्यापत्तेरुपेक्षितं।

यद्यपि तन्त्ररत्नादौ लिङ्गान्तरप्रदर्शनार्थं वचनान्तरमित्युक्तं तदपि भाष्योक्तविचारे लिङ्गानुपपत्तेः पूर्व्वपक्ष एव प्रदर्शितत्वाद-युक्तम्। ८। २। ६।

एवं वा ‡ गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके षष्ठोऽति-रात्रं पूर्व्वः ‡ पक्षः तथोत्तर मध्ये विषुवान्। तत्र पूर्व्वस्मिन् पक्षेऽभिप्रायणीयं प्रथममहः चतुर्विंशं द्वितीयं चत्वारोऽभिप्लवाः षडहा एकः षष्ठः षडहः मासाः सद्वितीयः सतृतीयः सचतुर्थः सपञ्चमः अथोऽभिप्लवा एकाहः त्रयः स्वरसामानः इत्यष्टाविंशतिरहानि आद्याभ्यामहोभ्यां सह षडमाः गवामयनप्रकरणे तत्रमासस्तोत्रा-वान्तरप्रकरणे च चतुःशतमैन्द्रार्षीहताः प्रगाथाः इतिश्रुतं। तत्र-त्रिष्वपु स्तोत्रेषु गानं उत द्वयोः प्रग्रथनेन इति चिन्तायां प्रागाथस्मरणात्

---

* क्वचित् पुस्तके अष्टौ इति न दृश्यते।

† अष्टाक्षराण्येव शिष्यन्ते इति क्वचित् पाठः।

‡ पूर्व्व इति पाठान्तरम्।

सुपात्त न च प्रकरणे च ऋच पठिता न वा प्रकृतोदाहरणवत् सामविधि, तत्र स्तोत्रविध्यन्यथानुपपत्त्या ऋचामानयनेऽपि साम्ना नयने प्रमाणाभाव। अथ तत्र प्रगीतमन्त्रसाध्यगुणाभिधानस्यैव स्तोत्रतया स्तोत्रविध्यन्यथानुपपत्त्यैव सामानयनं ततोऽत्रापि तत एव सामप्राप्ते "साम्ना स्तुवीत" इति विधिवैयर्थ्यापत्तेरिति चेत्। साम्ना स्तुवीत इत्यस्य प्रकारभ्याऽधीतत्वेन प्रकृतावानर्थक्येनाऽनिविशे सर्व्वं चैव विकृतौ अप्राकृतस्तोत्रविषये सामविधायकत्वोपपत्ते।

भाष्यकारादिभिस्तुभस्सारस्वादस्य विकृतिविशेषप्रकरणे पठित त्वाभ्नोकारे तु नाऽय वस्तुत सामविधिरपि तु स्तोत्रपदशक्तियाहक याज्ञिकप्रसिद्धयोहलक सन्ननुवाद एव अप्राकृतस्तोत्रविधिस्तुत्यर्थं एकत्वविधानार्थो वा इति ध्येयम्। एतदक्षरसादेव वर्णक्रान्तरम्।—

क्वचित् कर्मविशेषे "अय सहस्रमानव" इति इय ऋक् प्रगीता अप्रगीता च पठिता। पुनश्च "अय सहस्रमानव इत्येतया आहव नीयमुपतिष्ठते" इत्यनेन विनियुक्ता सा। द्विविधया पठितत्वात् द्विविधाऽपि विकल्पेन विनियुज्यते इति प्राप्ते—अप्रगीताया प्रमाणाय एव पाठ। अज्ञानवधारितस्वरूपाया सुख गान पर्याशशोधो वा सम्भवति। प्रगीतत्वेनाऽन्यार्था प्रयोजनमपेक्षमाणा उपस्थाने विनि युज्यते इति नैव ग्राह्या। योऽपि अप्रगीताया एव शाखान्तरे पाठ सोऽपि तत्पुरुषान् प्रति ऋक्स्वरूपज्ञानाय एव इति न शाखान्तरीयगणाख्यसंस्कारविरोध।८।२।६।

एव वा॥ सामसम्बन्धमद्वात् ऋग्यजुर्मन्त्रयो स्वरचिन्त्यते। ते हि क्वचिदुदात्तानुदात्तस्वरितप्रचयरूपचातुःस्वर्य्येण अधीता।

च मासोपार्जितानां त्वचानामाम्नानात्। अतएव तान्येकविंशति-दिनानि षष्ठमासस्य चाऽऽद्यानि द्वादश इत्येवंत्रयस्त्रिंशत् मासोपार्जिता सूचा इति वाक्येन तेषु सतोबृहतीनां विधानं। एवञ्च पञ्चमास-पर्यन्त पृष्ठा.षड़हेषु अपि सतोबृहतीनां विधानं भाष्यकारलिखना-दवगन्तव्यम्। शेषेषु त्र्यहःसु विशेषवचनाभावे तिसृणां अग्निष्टो-त्रिभिर्गायत्रोपादैः संयोगेन बृहतीत्रयसम्पादनम्। ननु क्वापि ब्रह्मसामस्तोत्रे प्रगाथः।

तदेतत् पञ्चसु मासःसु वार्हताः प्रगाथा आप्यन्ते इति लिङ्गं द्वयोः प्रग्रथने उपपद्यते नतु त्वचगाने क्रियमाणे भाष्यलिख-नात्। अष्टोत्तरशतद्वयसंख्याकानामृचां पञ्चप्रगाथसम्पादकदर्शक् न्यूनत्वादष्टनवत्यधिकशतावशिष्टानां षट्षष्टिस्त्वचा भवन्ति। तैव समाधिकेषु मासेषु समाप्येरन्।

तथा हि पूर्व्वोक्तरीत्या प्रतिमास दशदिनानां सतोबृहतीच्छन्द-स्कत्वाद्विंशतिदिनानि अवशिष्टानि तानि मासत्रयेण षष्टिः सम्पाद्यन्ते। अवशिष्टानि षट् चतुर्थमासस्याऽभिप्लवत्वोयवर्ण्ण उपादेयानीति समाधिकेषु त्रिषुमासेषु समाप्तिःस्यात्। यदा तु तुल्यन्यायत्वात् पञ्चस्वपि प्रगाथेषु च गानं तदा पञ्चदशानामृचां न्यूनत्वात् अवशिष्टास्त्रिनवतिशत ऋचः, तासां त्वचावत् षट्रिकाच त्र्यगिति मध्याधिके स्त्रिभिर्मासैस्तृचसमाप्तावपि एका त्र्यगवशिष्यते इति तद्वैयर्थ्यञ्च। तव्ययालिङ्गानुपपत्तिः प्रगाथशब्दानुपपत्तिश्च।

नचैकं त्वचं पठित्वाऽन्यास्तृचं पुनरुपादाय अविमत्रक् प्रग्रथनमेव किं न स्यात् इति वाच्य "अन्या अन्या ऋचोभवन्ति"

पुनर्निर्णायकत्वं * तस्य च कादाचित्कत्वेऽपि मन्त्रनैयत्यवदेव स्वरनैयत्योपपत्तिः। मन्त्रोच्चारणवदेव स्वरोच्चारणमिहेनैं स्वरानुसन्धानमात्रेण निर्णायकाशङ्का।

तदेवं द्विविध. स्वरस्य क्रतूपयोगः प्रकरणादिना सिध्येत्। तत्र च विशेषरूपेण स्मृत्या यज्ञप्रयोगे तानस्वरविधायिकया † बाधात् सामान्यरूपस्य प्रकरणादेः प्रयोगवहिर्भूतार्थनिर्णयोपयोगित्वविषयतैव कल्प्यते। प्रयोगमध्ये विस्मरणादौ तु स्वरानुसन्धानेनैव यर्थविशेषस्मरणम्।

अत्र च तानस्य यर्थविशेषोपयोगाभावेन यद्दृष्टार्थत्वेऽपि एकमन्त्रवृत्तित्वादेव वैस्वर्यादिबाधकता। *इतरथा गुणानुरोधेन मन्त्रावृत्त्यापत्ते*। अजपेत्यादिना तानपर्युदासाच्च जपादौ वैस्वर्यादिप्रसिप्रसवः। जपा जपतिचोदनाचोदिता मन्त्राः न्यूङ्गाः शस्त्रेषु मन्त्रविशेषाः।८।२।६।

॥ सामप्रदेशे ॥ एवं सामोहोपद्घात सप्रसङ्गं निरूप्य अधुना सामोहो निरूप्यते। "कवतीषु रथन्तरं गायति" "यद्योन्या गायति तदुत्तरयो"रित्यादौ यत्र सामातिदेश तत्र साम. स्वरस्वराभिव्यक्त्यर्थत्वाद् यत्र स्थाने योनौ एकारायचरमस्कारिका पार्श्वभावादिरूपा गीति श्रुता, तत्र स्थानान्तरे यत्रैवैकारपाठ उत्तरादौ तत्रैव पार्श्वभावरूपा गीतिरूहितव्या। ननु प्रकृतस्थानपठिताचरान्तरे कर्तव्या तत्र गीतेस्तदक्षराभिव्यञ्जकत्वासम्भवेन आरादुपकारकत्व-

* निर्णायकता इति क्वचित् पाठ।

† स्वरविधायकता इति क्वचित् पाठ।

अन्तिमस्य आम्नातस्य यच्छब्दोपबद्धत्वेन सामविधायकत्वा-भावाद् द्वयोरेवाऽप्राप्तार्थत्वादिना लिट्त्वमित्ययाद्वयक्सान्नो * रुभयो-रपि विधिः। अर्थाच्च तुल्यकार्य्यत्वविकल्पः। नचाऽसुरागमनेन ऋचो निन्दितत्वात् कथं तद्विधिः निषेधैकवाक्यतां विना निन्दात्वस्यैवाऽ प्रतीतेः। अतोऽत्यन्तदुराराध्यानां अपि ऋचा वशीकरणाद्विध्येक वाक्यतया अस्य स्तुतित्वमेव इति प्राप्ते—

वाक्यभेदवियमशिष्टविकल्पादिदोषभिया यच्छब्दोपबद्धस्याऽपि लिङ एव सामविधायकत्वं। नतु लट्त्वेन सन्दिग्धयो। एवं च साम्न एव इयं सर्व्वा स्तुति। ऋङ्निन्दाऽपि "न हि निन्दा" न्यायेन विधेयसामस्तुत्यर्थं वा इति तस्याः प्रगीताया एव साधनत्वं। अस्त्वाऽधिकरणं –यत्र स्तोत्रान्तरप्रकरणे—साम तद्योनिरुत्तरात्र न पठिता तद्विषयम्। इतरत्र साम्ना ऋचा च प्रकरणादिनैव यज्ञ-स्तोत्रपत्ते सामविधिवैयर्थ्यात्।

अतएव प्रकृतोदाहरणे—साम्नेति एकवचनोपादानात् एकमेव साम सामवेदादानेयम्। ऋक् च तत्र योनिरूपैव। "एकं साम तृचे क्रियते यद्योन्यां गायति" इत्यादेर्योनावाङ्नियम न्यायेन प्राकृततत्तत्स्तोत्रीयर्क्षामिवोद्देशेन अप्राकृते अप्रहृत्ते। क्रतु-गत प्राकृतवत् स्तोमत्वादिगुणानुरोधात् तु एकस्या एव प्रगीताया ऋचः तावद्वारमभ्यासः।

नचैवं यत्र प्राकृतस्तोत्रावान्तरप्रकरणे योनिरुत्तरा च आम्नाता तद्योत्तरयोः भाव्ये प्रमाणाभावः। यत्र च संज्ञादिभिर्न स्तोत्रान्तर-

---

* ऋक् सामयोरिति क्वचित् पाठः।

तत्रावशिष्टगीते लोपो यत्र वा ऋगक्षराधिक्यं तत्र गीतिविशेषस्याप्राप्तिरित्याद्यापद्यमानमपि न दुष्यति। ८। २। ७।

॥ स्तोभस्यैके ॥ साम्नः कश्चिदंशऋगक्षराधिरूढः कश्चिश्च स्तोभाक्षराधिरूढः। प्रजापतिहृदयादौ स्तोभाक्षराधिरूढ एव। तत्र सामातिदेशे स्तोभानामप्यतिदेशो भवेन्नवेति चिन्तायां साम्न ऋगक्षराभिव्यङ्ग्यत्ववत् स्तोभाक्षराभिव्यङ्ग्यत्वस्य तुल्यत्वाद् गुणानुरोधेन प्रधानभूतानां ऋचामिव स्तोभानामपि माऽतिदेशः। न च स्तोभानां प्रायशोऽनर्थकत्वात् स्तोत्रसाधनत्वासम्भवेन नियुज्यमानानां प्राधान्यानुपपत्तेर्गीतिकालपरिच्छेदकत्वेन गोत्यङ्गत्वात्सदतिदेशे चातिदेशोपपत्तिरिति वाच्य। अग्निष्टपतीत्यादिमाध्यकारोक्तस्तोभाक्षराणां ऋगेकवाक्यत्वासम्भवेऽपि स्वातन्त्र्येणैव गुणाभिधानरूपस्तोत्रकारणत्वसम्भवेन ऋग्वदेवप्राधान्योपपत्तेः। येषामपि हुंफडादि स्तोभाक्षराणामर्थशून्यत्वं तत्राऽपि तदुच्चारणस्यादृष्टद्वारानुष्ठानमात्रदेशात् प्रधानऋगङ्गत्वं प्रकरणादिना स्तोत्राङ्गत्वमेव वेति न सामाङ्गत्वकल्पनावसरः। नच साम्नोवादृष्टार्थत्वं स्तोभानां वेत्यत्र नियामकाभावः। साम्नोऽंशे ऽदृष्टार्थत्वमंशे चादृष्टार्थत्वमित्येवंविधवैरूप्यापत्तेरेव नियामकत्वादिति प्राप्ते यज्ञायज्ञीयेन स्तुवीतेत्यादौ तत्र तत्र साम्ना सामान्यतो विशेषतश्च विनियोगस्यैव नियामकत्वेन सामोच्चारणस्यैव तदंशेऽदृष्टार्थत्वं स्तोभानां त्वर्थशून्यानां गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वमेव अन्यथा हि साम्नःप्रकरणादिनैव सर्वस्याऽपि विवक्षितार्थत्वलाभे विनियोगविधिवैयर्थ्यापत्तिः। अतो विनियोगवशेन झटितिप्रयोजनलाभे द्वारभूतादृष्टस्याऽपि तत्रैव

क्वचित् तत्र प्रचयवर्ज्जं त्रैस्वर्य्येण। तत्रोभयोरपि गीतिप्रकारवद् विकल्प एव।

न च "तानो यज्ञकर्म्मणि अजपन्यूङ्खसामसु" इति स्मृत्या तानस्वरस्य विहितत्वात् उभयबाध इति वाच्यं श्रौतानामध्ययनविध्यध्यापितानां स्वराणां पाठादिना तत्तत्फलपूर्व्वसाधनीभूतमन्त्रवृत्तित्वस्य प्रबलप्रमाणप्रमितत्वेन स्मृत्या बाधायोगात्। अन्यथा "अग्निर्मूर्द्धा" इत्यादीनां स्मृत्या नवग्रहाङ्गहोमसाधने विनियोगात् क्रमादिना आग्नेयाद्यङ्गत्वानापत्तेः।

नचैवं नवग्रहहोमाङ्गत्वानापत्तिः। सौर्य्याकाङ्क्षयैव नवग्रहहोमाकाङ्क्षयैव वाक्येन विनियोगोपपत्तेः। प्रकृते तु श्रौतस्वरविरोधात् तानस्मृतेरप्रामाण्यमेव इति प्राप्ते—

श्रौतस्य स्वरस्य अध्ययनविधिना अध्यापितस्य प्रयोजनापेक्षाया "यद्यद्गृह्णुयात् तत्तत् कुर्य्यात्" इत्युपबन्धेन प्रकरणादिसहकृतमन्त्रवृत्तिपाठेन च प्रयोजनद्वयमवगम्यते। एवं तावत् प्रयोगकालात् पूर्व्वमेव अर्थविशेषनिर्णायकत्वं। न च मन्त्राणां प्रयोगकाल एव अर्थस्मारकत्वात् पूर्व्वमर्थविशेषावधारणाभावेऽपि बाधकाभाव. विध्यवगतस्याऽपि अर्थविशेषस्य प्रयोगकाले मन्त्रप्रतिपाद्यत्वसन्देहे प्रयोगप्रारम्भावभङ्गापत्तेः। अतस्तदर्थं प्रयोगाद् वहिरेव मन्त्रार्थनिर्णयार्थं—"बहुव्रीहौ प्रकृत्या पूर्व्वपदं" इत्यादिस्वरोपयोगः। अपरश्च * पूर्व्वमवधारितस्याऽपि अर्थस्य प्रयोगमध्ये विस्मरणे

---

* अपरश्च इति पाठान्तरं।

प्रयोजनवत्त्वमात्रेण स्वाध्यायविधेरुपयोग । नहि वेदत्वावच्छेदेन प्रामाण्यमिति राजाज्ञा वेदोऽखिलो धर्म्ममूलमिति मूलपदस्य जनकत्वज्ञापकत्वोभयसाधारण्येनाऽप्युपपत्तेः । ८ । २ । ८ ।

॥ धर्म्मस्य ॥ तदेवं त्रिविधस्याऽप्यूहस्य प्राकृतदेवतादिस्थानापन्न एव वैकृतदेवतादौ प्रसक्ते स्थानापत्तिरिदानीं निरूप्यते । तत्र मूले तत्कार्य्यकारित्वरूपां स्थानापत्तिमङ्गीकृत्य तस्याः पञ्चविधत्वमुक्तं । यद्यपि च सर्व्वत्र विधिरेव स्थानापत्तौ बीजं । तथाऽपि तत्तत्कारीणि पञ्चेति पञ्चविधत्वं प्रत्यक्षादनुमानाच्छ्रुतस्वशब्दात् प्रतिषेधानुमितस्वशब्दादभावे विध्यनुमितप्रतिषेधकल्पितस्वशब्दादिति । तेषाञ्चोदाहरणानि नैवारश्चरुरिति नीवाराणां व्रीहिकार्य्यकारित्वं प्रत्यक्षात् । न च नैवार इति विकारार्थतद्धितरूपस्वशब्दादेवैतदिति शङ्क्यं तस्य सम्बन्धसामान्यवाचित्वेनाऽप्युपपत्तौ चरौ नीवारविकृतित्वस्य प्रत्यक्षाधीनत्वात् । तथा नखावभिन्नश्चरुर्भवतीत्यत्र नखानामुलूखलमुसलस्थानापन्नत्वमनुमानात् नखानां हि अवघातमेव प्रत्यक्षेण कार्य्यमवधार्य्यते । उलूखलमुसलयोश्चावघात । अवघातेनावघातयोरेकवितुषीभावकार्य्यत्वात्तत्साधनयोरपि एकवितुषीभावप्रयोजकत्वमनुमेयमेव । तथा चातुर्मास्येषु परिधौ पशुं नियुञ्जीते"ति श्रुतस्य परिधेर्यूपकार्य्यकारित्वं श्रुतस्वशब्दादेव नह्यत्र प्राकृतनियोजनान्तरविधिर्विशिष्टविध्यादिगौरवापत्तेः । तथा न गिरा गिरेति निषेधानुवादबलाद्गिरापदकार्य्यवाचि स्वशब्दानुमाने इरापदस्य गिरापदस्थानापन्नत्वं तथा भक्षिते पडहे मध्वाशयेऽप्युत त्वत्पडहाभावे मध्वशनविधिना पडहप्रतिषेधमनुमाय तेन पडह

प्रसङ्गात्। आईभावो हि प्रकृतौ अवर्णइवर्णात्मकस्य सन्ध्यक्षरस्यैकारस्य विश्लेषरूपसंस्कारार्थः। न हि एकारो नाम वर्णान्तरं प्रमाणाभावात् अपि तु स्मृतिसहकृतप्रत्यक्षेण अवर्ण इवर्णात्मक एव। अतश्च तद्विश्लेषकस्य आईभावस्य तत्स्थानपठितास्वरान्तरविश्लेषकत्वासम्भवात् यदैवोत्तरादाचेकारः तदैव आईभावः कार्य्यः।

यद्यपि च अयं विश्लेषादिरूपः संस्कारो नाऽर्थाभिधानोपयोगि तथा दृष्टार्थस्तद्व्यतिरेकेणैव सन्ध्यक्षरेणाऽर्थाभिधानस्य जायमानत्वात्। तथाऽपि गानमसकृतमन्त्रजन्यगुणाभिव्यञ्जकैरेव स्तावकतया स्तोत्रत्वसिद्ध्यंगतयैवोपयुज्यते।

नन्वेवं न विश्लेषादिरूप एव संस्कारः प्रमाणाभावात् अननुगमाच्च। न हि विश्लेष एव सर्व्वत्र संस्कारः, "एच ऐई इत्येतानि तालव्य"मिति स्मृत्या इईकारयोरपि तालव्यत्वात् "तालव्यमाईयद्वृद्धि"मिति स्मृत्या च तथाऽपि आईभावविधानेन तत्र सन्ध्यक्षरत्वाभावेन विश्लेषासम्भवात्। अतः सर्व्वानुगता वर्णान्तरागमेन पूर्व्वाक्षरपरिलोप एव संस्कारः स्तोत्रत्वघटकः। तस्य च एकारस्थाने स्थितवर्णान्तरेऽपि सम्भवात् नोक्तसिद्धिरिति वाच्यम्। तथात्वेऽपि संस्कार्यतावच्छेदकस्यैकारत्वस्य अक्षरान्तरेष्वभावेन उक्तोपपत्तेः।

वस्तुतस्तु परिलोपाख्यसंस्काराङ्गीकारे श्रुतस्य वर्णस्य स्तोत्रसाधनत्वानापत्तेर्लोपस्य काऽपि संस्कारत्वादर्शनाच्च विश्लेषादिरेव सामगप्रसिद्धोऽननुगतोऽपि संस्कार इति सिद्धोऽर्थः।

एवञ्च प्रधानभूतात्तरादिऋगक्षरानुरोधेन यत्र ऋगक्षरात्मत्वं

भावात् सत्यपि तन्निवर्त्तकत्वे इरापदस्य नैव तत्कार्य्यापत्ति रित्युक्तमेव।

पञ्चमेऽपि सत्यामपि षडहादिकार्य्यापत्तौ अभावे विधिनैवा ऽपत्त्यादिना तदकरणे स्वशब्दमात्रकल्पनया तत्कार्य्यं सम्भवता दितिविधुरपपत्ते प्रतिषेधानुमानवैयर्थ्यम्। अतो मूलोक्तप्रकारानु पपत्तेरेव वाच्यम्। यस्य पदार्थस्य येन रूपेण यादृशपदाकाङ्क्षा पूरकत्वं तेनैव रूपेण तस्यास्तत्सदृश्याया वा भावनायास्तादृशा काङ्क्षापूरकत्वं यस्य पदार्थस्य तस्य तत्पदार्थस्थानापन्नत्वं। अस्ति चेह ब्रह्मवर्चसादौ। स्वर्गादेर्हि येन रूपेण भाव्यत्व करणत्वादिना किमस्य भाव्यं करणं वेत्यादिभावनाकाङ्क्षापूरकत्वं प्रकृतो तेनैव रूपेण तद्भावनासदृश्यायां सौर्य्यादिभावनायां ब्रह्म वर्चसादेस्तादृशाकाङ्क्षापूरकत्वात् स्वर्गादिस्थानापन्नत्वमिति।

सौर्य्यस्य चाऽऽग्नेयस्थानापन्नत्वं नीवारस्य व्रीह्यादीनाञ्च किमस्य प्रदेय प्रकृतिद्रव्यवैतुष्यसाधनीभूतक्रियासाधनत्वं वत्येतत्पाद्याकाङ्क्षापूर कत्वं तेन तेन रूपेण व्रीहिमुसलादिवदेव समानमिति तत्स्थाना पन्नत्वमिति। षडहस्य च येन रूपेण यस्यामेव भावनायां यादृशा काङ्क्षापूरकत्वं तस्यामेव तेन सम्भवत्यस्ति तस्याऽपि तत्स्थानापत्ति कल्पाचिन्तया न विरुध्यते।

ईदृशस्थानापत्तिघटकञ्च भाव्यत्वादिकं रूपं पञ्चधाऽवगम्यते। क्वचिदनुमानात्, क्वचिच्छ्रुतस्वशब्दात्, क्वचिच्छाब्दिकात् क्वचित् प्रतिषेधानुमितात्, क्वचिदभावविध्यनुमितात्। तत्राद्योदाहरणं नीवाराः। अनुमानप्रकारश्च नीवाराः प्रदेयचरुप्रकृतिभूता

झटितिकल्पना नतु स्तोभेषु स्तोत्रादिरूपदार्थसम्बन्धकल्पनसापेक्षत्वात्। अतः स्तोभानां गीत्यङ्गत्वात्तदतिदेशेनाऽतिदेशोपपत्तेन तदंशस्य लोपाख्योऽन्यथाभावः। अर्थवत्स्तोभाक्षरेषु तु ऋगक्षरवदेव स्तोत्राद्युपयोगोपपत्तेर्गीतिरेव तदङ्गत्वमिति तु प्रतिभाति। अतएवाऽनर्थकस्तोभेषु अभ्यासत्वे मात्र आश्रयिकर्मत्वं तदभावे तु गुणादृष्टार्थत्वमेव। ८।२।७।

॥ अधिकं ॥ प्रसङ्गात् स्तोभलक्षणमुच्यते। ये ऋगक्षरेभ्य ऋगर्थाभिधानोपयोगिभ्योऽधिका ऋगक्षरविलक्षणावर्णास्ते स्तोभाः। अत्र ऋगक्षरेभ्योऽधिकत्वेऽपि वान्द्रियान्द्रिरित्यभ्यासे ऋगक्षरविलक्षणत्वाभावादन्त्यं विशेषणम्, अक्नार्इत्यादिविकारे ऋगक्षरविलक्षणत्वेऽपि आधिक्याभावादाद्यं। वस्तुतस्तु विलक्षणत्वस्यार्थानभिधायकत्वरूपत्वे अर्थाभिधायकेषु अग्निष्टपतीत्यादि स्तोभेष्वव्याप्तेरन्यस्य च विलक्षणत्वस्य निर्वक्तुमशक्यत्वादभियुक्तानां स्तोभ इति प्रसिद्धिस्ते स्तोभाः। स्तोभत्वञ्च मन्त्रत्वादिवदेवाखण्डोपाधिरिति न लक्ष्यतावच्छेदकाप्रसिद्धिः। अत्र च येऽर्थवन्तः स्तोभास्तेषां ऋङ्मन्त्रवदेव गुणिनिष्ठगुणाभिधानजनकत्वादेव प्रामाण्यं गुणाभिधानस्य चाऽदृष्टार्थत्वेऽपि ज्ञानस्य स्वतःप्रमाणत्वाद्दोषाभावेन चाऽप्रामाण्यायोगाद्विषयसिद्धेः प्रमात्वाविघातो ऋग्वदेवनाऽनुपपन्नः। यदि तु देवताविग्रहादिप्रसङ्गभिया तात्पर्यविषयीभूतस्यैवाऽर्थस्य सिद्धिः। प्रकृते तु अदृष्टान्तं गुणाभिधानस्य अदृष्टार्थत्वान्न तात्पर्यकल्पना। अपि तु आहार्यज्ञानजनकत्वमेव। तदाऽस्तु पदार्थविधया प्रामाण्यं अनर्थकस्तोभाक्षरवत्। अथवा सर्व्वदेवमादिस्थले प्रामाण्याभावेऽपि

पत्तिस्तथाऽपि न परिधौ यूपधर्म्माः। सत्यपि परिधेः पशुनियोजनं प्रति समस्याऽङ्गत्वे पुरोडाशकपालन्यायेनाऽग्निपरिधानप्रयुक्तस्यैव परिधेः पशुनियोजनशेषत्वेन तत्प्रयुक्तत्वाभावाद्धर्म्माणाञ्चाऽपूर्व्वीयपशुनियोजनप्रयुक्ताधिकरणार्थत्वेन तदप्रयुक्ताधिकरणे परिधावसम्भवात्। न च गौरवेण प्रयुक्तत्वस्य नोद्देश्यतावच्छेदककोटिप्रवेशः। शेषत्वसाधनत्वसम्बन्धित्वाद्यपेक्षया प्रयुक्तत्वस्याऽपि तदघटितत्वेन लघुत्वात्।

किञ्च। भट्टघटिते यूपत्वरूपे वैयर्थ्याभावाद्धर्म्माणां छेदनादीनां युगेतृपत्वार्थत्वमेव सत्पूर्व्वीयसाधनविशेषार्थत्वमाधानवत्। न च परिधौ यूपत्वमस्ति। तद्धि दृष्टादृष्टसंस्कारसमुदायो वा स्यात्तावत् संस्कारजन्यादृष्टान्तरं वा तद्विशिष्टं काष्ठं वा। सर्व्वथा परिधौ न तत्सम्भवः। परिधानप्रयुक्तधर्म्माणामपि सत्वकृत्वादीनां तत्राऽवश्यकत्वस्य वक्ष्यमाणत्वेन नोयणादीनां यूपधर्म्माणां बाधावश्यंभावेन तावत् संस्कारसमुदायासम्भवात्। नहि यूपशब्दःप्रत्येकमेकैकसंस्कारवाची अनेकशक्तिकल्पनापत्तेः। कतिपयसंस्कारयुक्ते यूपशब्दप्रयोगाभावाच्च। यूपं छिनत्तीत्यादेस्तत्तत्संस्कारेण यूपंसम्पादयेदित्यर्थाङ्गीकारेण समुदायादिवाचित्वेऽप्युपपत्तेः। अन्यथा एकैकसंस्कारस्याऽपि यूपत्वे तज्जनकच्छेदनादीनां विकल्पापत्तेः। अतोयूपोत्पादकानां धर्म्माणामर्थलोपादेव परिधावसम्भव इति प्राप्ते न तावत् स्थानोपपत्त्यसम्भवः। सत्यपि नियोजनान्तरविधौ प्राकाशाध्वर्य्युदानवत् प्राकृतनियोजनकार्य्य एव तद्विधानेन तदुपपत्तेः।

वाचित्वमन्दानुमानेन षड्हस्यानापन्नत्व मध्यमनादि । इदञ्च भाष्यकारोक्तमपि कृत्वाचिन्तयोदाहृतमिति मन्तव्य । षड्हसमास्तुत्तर तद्ग्रहत्वेनाऽत्र मध्यमनविधानेन षड्हाभावे मध्यमनविधौ प्रमाणाभावात् स्थिरादाहरण त्वर तु स्पष्टमित्युक्त षष प्रतिभाति । न तावत्तत्कार्य्यकारित्व तत्स्थानापन्नत्व ब्रह्मवर्चसादिफलस्य सौर्य्यादिकरणस्य च स्वर्गाग्नेयादिकार्य्यकारित्वाभावेन स्थानापत्त्यनापत्ते । नचेष्टापत्ति । "अग्नमद्यवपि"त्यादौ यागानुमन्त्रणादौ घोहानापत्त । "सूर्य्यस्याऽह देवयज्यये"त्यादियागानुमन्त्रणे यज्यापदे पदान्तरप्रक्षेपरूपमात्राहाभावेऽपि यागान्तरपरत्वेन अन्यथाभावा मकस्य मुख्यस्योहस्य तादवस्थ्यात् । चरुनीवारमपादोनामपि त्वरकार्य्यभेदेन स्थानापत्त्यनापत्तेय तद्योदाहरणान्यप्ययुक्तानि । तथा हि नीवाराणां चरुधर्म्मप्रजनकत्वस्याऽन्वयव्यतिरेकाभ्यामनुमेयत्वेन प्रत्यक्षाविषयत्वात् । न हि मधमससमानाधिकरण्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वादिरूपप्रत्यक्षायोग्यपदार्थघटितव्याप्तिघटितजनकत्वस्य लौकिकप्रत्यक्ष सम्भवति । अलौकिकप्रत्यक्ष नखादिष्वपि तुल्य । किञ्चैव नखेष्वपि उलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वस्य प्रत्यक्षत्वापत्ति ।

दृतीयोदाहरणेऽपि यद्यपि परिधौ पशुनियोजनसाधनत्व श्रुत, तथाऽपि नियोजनस्य यूपायत्व न श्रुतमिति न यूपकार्य्यकारित्वस्य श्रुतत्वशङ्काऽस्यता ।

चतुर्थ तु गिरापदस्याऽग्निष्टोमस्तोत्रसाधनत्वाभावेन तत्कार्य्य सैवाऽमासहरथाभिधानसामरूपकार्य्यस्य च गीत्यादिधर्म्मग्राहकत्वा

इत्यत्र तद्विधाने वाक्यभेदात्। उच्छ्रयणादीनान्तु अग्निमग्नाग्न्याधे नात्पत्तयूपसंस्कारकत्वादपूर्व्वसाधनीभूत पशुनियोजनाधारत्वलक्षणा यूपधर्म्मत्वेनायूपे परिध्यादावपि प्राप्त्युपपत्तिः। उच्छ्रयणमात्र पर मर्थलोपादिना निवर्त्तते। सर्वेध यूपायाऽज्यमानायेति मन्त्रे ऊहा पत्तिः। समाख्यातेऽपि समानत्वात्। परिधये अज्यमानायेत्यादिरूह स्येष्टापत्त्येव सुपरिहरत्वाच्च। सूत्रस्य चोहपरत्वेनाऽपि व्याख्यान सम्भवात्। ८। २। १०।

॥ पराय॥ अभ्युदितादा दधिशृतयोः प्रदानार्थत्वात् प्रकृतधर्म्मा स्तावद्दोहादयो भवन्त्येव। तण्डुलश्रपणसाधनत्वस्याऽपि तु सङ्ख्यप यतीति विधिकल्पनीयसिद्धत्वादसत्यपि तत्प्रयुक्तत्व सन्देहत्वे वा साधनत्वसम्बन्धस्यापूर्व्वसम्बन्धिश्रपणसम्बन्धित्वस्य सत्त्वाद्दधिशृतया प्रणीता धर्म्मा अपि उत्पवनप्रणयनादयो भवन्ति न हि धर्म्मसम्बन्धे उद्देश्यस्याऽपूर्व्वीयत्वमपि प्रयोजक गौरवात् अपि तु शास्त्रस्य सत्ता विषयत्वसिद्धौ अपूर्व्वसम्बन्धित्वमेव। अतएवाऽग्नयेत्यादिमन्त्रस्याऽप्य पूर्व्वसाध्यफलार्थत्व स च सम्बन्ध प्रकृते श्रपणसाधनतायां समस्त्येव।

ननु दधिशृतयोस्तण्डुलश्रपणसाधनत्वेऽपि न प्रणीताधर्म्मप्राप्तिः। प्रणीतानां हि सम्यवनार्थत्वेन विनियोगात्। प्रकृते च सम्यवना भावेन तदनुपपत्तेः। अतएव सौर्य्यादिचरुष्वपि वहिरूपणापाका भावात् कपालतद्धर्म्मनिवृत्तिवत् सम्यवनाभावात् प्रणीतातद्धर्म्म निवृत्तिरवश्यं चेत्। प्रणीतानां वाक्येन पिण्डसम्यवनसाधनत्वा वगमेऽपि आनुषङ्गिकहवि पाकसाधनत्वस्यापि सत्त्वात् सौर्य्यादि चरौ प्रकृते च प्रणीताधर्म्मापत्तेः। कृत्वाचिन्तया चाऽयं विचारः। इयञ्च

चर्व्वन्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वे सति समवायित्वात् सामान्यमुखव्याप्त्या मृत्पिण्डवदिति न ह्येष्वपि चैवमेवाऽनुमान-प्रकारो बोध्य। तथा वैतुष्यप्रयोजका वैतुष्यान्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वात्। कुलालपितृदण्डादिवदिति। द्वितीयोदाहरणन्तु परिधिरेवायूपीयत्वस्य गन्धशब्दगम्यत्वाभावेऽपि परिधिजन्यत्वस्य तद्गम्यत्वात्। तृतीयोदाहरणं शरमयं बर्हिरित्यत्र बर्हि पदेन तत्कार्य्यलक्षणयाच्छादकत्वात् बर्हिः स्थानापन्नत्वम्। चतुर्थोदाहरणं "हुधक्सोमस्सत्य" इत्यादि ऋचा प्रकृतौ वज्रिवमानस्तोत्रे कृतकार्य्यायाः उपहव्याख्यविकृतौ चातिदेशेन प्राप्ते "न सोमेति ब्रूयादिन्द्र इति ब्रूयादि"ति निषेधानुवादबलेनेन्द्रपदस्य सोमपद-स्थानापन्नत्व एव "न मित्रस्येति ब्रूयाद्ब्रह्मण इति ब्रूयादि"त्यादावपि वैकृतमुदाहर्त्तव्य। पञ्चमं तु निषेधकल्पनाभावेऽपि क्त्वाचिन्तया तदेव। षष्ठोदाहरणन्तु "यदि सत्राय दीक्षिताना माऽप्युत्तिष्ठासेत् सोमसपभज्य विश्वजिता यजेत। य सत्रायाऽऽगुरेत स विश्वजिता यजेतेत्यादौ सामान्याभावे वैश्वानर्य्यादौ बोध्य। अत्र च स्थानापत्तिसत्त्वेऽपि न सत्रादिधर्म्मप्राप्ति। यद्यपिसायामहृघटितमाहृत्यस्यैव पुरःस्फूर्त्तिकत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वात्। ८।२।८।

॥ तदुत्पत्ते ॥ परिधौ पुनराचिष्य समाधीयते न परिधेर्यूप-स्थानापन्नत्व "परिधौ पशुं नियुञ्जीते"त्यत्र परिधेर्नियोजनानुवादेन विधावतिप्रसङ्गापत्ते। पशुनियोजनानुवादेन विधौ विशिष्टो-द्देशापत्तेर्नियोजनान्तरस्यैवाऽप्राप्ततया विधेयत्वात्। अस्तु वा स्थाना-

धर्मेषु रथन्तरोपादानं केषुचिद्दृष्ट इति प्रतिनियतनिवेशादृष्टान्तत्वादि विवक्षया धर्मोऽव्यवस्थेत्यप्यपास्तम्।

नचैवमपि रथन्तरादिगीतेः ऋगक्षराभिव्यञ्जकांशस्य दृष्टार्थत्वेऽपि स्तोभावरूपांशस्यादृष्टार्थत्वात्तददृष्टयोश्च गीतिभेदेन भेदात्तत्तदपूर्वसाधनत्वलक्षणया धर्माणां प्रकृतौ न साङ्कर्यं। बृहद्रथन्तरस्य बृहद्रथन्तरत्वाऽभावत्वेन तद्गतस्तोभान्वितगीत्यंशस्य प्राकृतस्तोभान्वितगीत्यंशजन्यादृष्टार्थत्वेनैव हिरण्यगर्भमन्त्रन्यायेन कल्पनात्तत्रापि धर्मानुपपत्तिरिति वाच्यम्। एवमपि ऋगक्षराभिव्यञ्जकगीत्यंशधर्मेषु स्वरादिरूपधर्माणां साङ्कर्यस्याऽनिवारणात्। न च तथाऽपि सामद्वयजन्यनियमादृष्टभेदात्तन्नियमादृष्टसाधनत्वस्यैव च तत्तद्धर्मविधावुद्देश्यतावच्छेदकत्वात् कण्वरथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तद्भेदाभावात् साङ्कर्याद्यनापत्तेरिति वाच्यम्। नियमादृष्टस्य नियमजन्यत्वेन सामजन्यत्वाभावात्। तज्जन्यत्वेऽपि वा दृष्टप्रयोजनस्यैवाऽव्यभिचारात् पुनस्स्फूर्तिकतया साधनत्वस्य प्रयोजकत्वेन नियमादृष्टस्य तत्प्रयोजकत्वाभावात् इतरथा कण्वरथन्तरेऽपि धर्मातिदेशानुपपत्तेरिति प्राप्ते—यद्यपि स्तोत्रद्वयजन्यापूर्वैक्यं प्रधानसंस्कार्यभेदादावश्यकमिति। तथा हि स्तोत्रत्वं तदाप्यवैजात्यं वा न तावत् गुणिगुणाभिधानव्यक्तिविशेषस्य द्वादशस्तोत्रत्वानुपपत्तेः। अपि तु तत्तत्स्तोत्रगुणाभिधानव्यक्तिषु व्यासज्यवृत्ति। तासाञ्च न यौगपद्यं क्षणिकत्वात् क्रमिकत्वाच्च। अतस्तत्तद्गुणाभिधानेभ्यः संस्काररूपाण्यदृष्टान्युत्पद्यन्ते तैश्च सकलगुणसमूहालम्बनात्मिका तत्तद्विजातीयस्तोत्रत्वावच्छिन्ना अभिधानव्यक्तिरेकोत्पद्यत इति

वस्तुतस्तु यावदतिदेशेन प्राप्यते तावत् पूर्व्वमेव परिधिविशिष्टप्राकृतनियोजनस्यैव परिधिप्राप्तिफलकतया पशूद्देशेन विधानोपपत्तेः स्थानापत्त्यविरोधः। न च धर्म्मासम्भवः। उद्देश्यस्वरूपेऽपार्थक्यप्रसक्तौ शास्त्रस्य महाविषयत्वसिद्ध्यर्थं अपूर्व्वसम्बन्धित्वस्यैवोद्देश्यताघटकत्वात् सम्बन्धित्वञ्च सम्बन्धावित्ति प्रतीतिमात्रिकः सकलतत्तत्सम्बन्धित्वव्यापकोऽखण्डोपाधिरूपो धर्म्मः। तेन तत्तत्सम्बन्ध्यन्यतरत्वरूपतया सम्बन्धित्वस्य न गुरुभूतत्वशङ्का। वक्ष्यते चैतदग्नेत्यादिमन्त्रस्याऽपूर्व्वार्थमुत्तराधिकरणे।

यत्तु च्छेदनादीनां यूपोत्पादकतया नाऽयूपे परिधौ धर्म्मप्राप्तिरिति, तत्र पार्थसारथिः। तदुक्तरीत्यैव यूपशब्दस्य दृष्टादृष्टसंस्कारसमुदाये शक्तिः। नतु तावत् संस्कारजन्यादृष्टान्तरे प्रमाणाभावात्। तावत्संस्काराणामेव च नियोजनाङ्गत्वम्। अतश्च परिधित्वलेवाद्यादौ कतिपयधर्म्मबाधेऽपि धर्म्मान्तरकरणं नाऽनुपपन्नमिति। तन्न। समुदायस्यातिरिक्तत्वे तस्यैव नियोजनाङ्गत्वापत्तेः संस्काराणां समुदायोत्पादकत्वापत्तौ परिध्यादौ तदभावेन धर्म्मप्राप्त्यनापत्तेः। अनतिरिक्तत्वे शक्यतावच्छेदकभेदेनाऽनेकशक्तितादवस्थ्यात्। इतरथा, लक्षणोच्छेदापत्तेः। अतो लाघवादाहवनीयादिपदवदेवादृष्टान्तरे तद्विशिष्टकाष्ठ एव वा यूपपदस्य शक्तिः। तथादृष्टं नोच्छ्रयणाञ्जनादिसकलसंस्कारजन्यमपि तु यूपाहुत्याद्यङ्गकच्छेदनजोषणाष्टास्रीकरणजन्यमेव। अतएव याज्ञिकानां दीक्षाकाले तावतामेवाऽपकर्षः। युक्तञ्चैतत् "दीक्षासु यूपं छिनत्ती"त्यत्र यूपोत्पत्त्यनुवादेनैव दीक्षाकालविधानात्। इतरथा यूपच्छेदनो

नैव तज्जनकत्वम्। न च मासमोषवगादेरलक्ष्यायावाच्छन्नोत्पत्ति, मित्रोन्ननादेरपि मासमौत्वसम्पादकतया चक्षमामस्यान्य तद भावात्। न च मन्नोन्ननादेरपि समुच्चय मन्नोन्ननादिसमुच्चयं मासयोमस्वादेरलक्ष्यायावच्छिन्नोत्पत्तिस्तदुत्पत्ती च प्रयोजकमस्त्वाम् मन्नोन्ननादिसमुच्चय इति इतरेतराश्रयत्वात् एकवस्त्री जातिद्वयाङ्गी कारे साङ्कर्यप्रसङ्गाच्च। अत मन्नोन्ननादीनामेच्छिकी विकल्प एवेति। ८। २। १२।

॥ उभयसाम्नि ॥ यत्र समवगोमतयेनादौ हृहद्रथन्तरयो प्रकृती विकल्पे प्राप्त "उभे हृहद्रथन्तर भवत" इति श्रुतम्। तत्र यज्ञते तावदेक पृष्ठस्तोत्र साम्नार्यं च तस्मिन् विकल्पस्तदाऽनेन वचनेन तयो समुच्चयमात्रविधानादेकाम्निवत् मसदशस्तोमके पृष्ठे प्राप्त सामद्वय तत्र च व्यवस्थिता एव तत्तद्धर्मा। यदा तु प्रकृता वेव पृष्ठस्तोत्रद्वय वैकल्पिक इह च तयोरेव हृहद्रथन्तरपदलक्षितयो समुच्चयस्तदा तत्तत्स्तोत्रकपृष्ठद्वयस्य प्रत्येकमसदशस्तोमकस्य कारणा द्धर्माणा व्यवस्थैव। नत्राप्येकैककार्य्यं समुच्चितसामद्वयविधान येन कैककार्य्यं उभयविधानादुभयत्रोभयधर्मा स्यु। विशिष्टविधिगौर वादप्राकृतकार्यतापत्तेश्च। यथावस्थितयोरेव समुच्चयमात्रविधा नाङ्गीकरणात्। अतस्तत्तत् साम्नि तत्तद्धर्मा एव मन्नोन्ननादय। नैमित्तिकव्यवस्थायतानियमस्तु सत्यपि सामद्वये तयोर्विरोधित्वाभावेन निमित्तत्वाभावाद्भवतोत्युक्त कास्तुभे। अत्र च पृष्ठद्वयजन्यापूर्व्वस्यैक जातीयत्वेऽपि समुच्चयानुरोधेन व्यक्तिद्वयोत्पत्तिरिति ध्येयम्।

इदञ्च पृष्ठद्वयसमुच्चयोदाहरण समवगोमवादिरूप मूले कृत्वा

गुणोत्ताधर्म्मापत्ति मत्यप्यकर्म्मान्तरत्वेदधिसृतयोराग्नेयहवि ष्यवण साधनत्वस्य नैमित्तिकसहय्यपयप्रयुक्तत्वे नैमित्तिकतुल्यत्वात् फलचम सन्यायेन स्यानापत्तैव नतु व्रीहियवन्यायेनेति ध्येयम। ८।२।११।

॥ एकार्थत्व ॥ ज्योतिष्टोमे "पृष्ठै स्तुवत" इत्यनेन षट्पृष्ठस्तोत्राणि विहितानि। तत्र बृहद्रथन्तरसामसाध्ययोर्बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनाद्विकल्प । तथा नोधसश्यैतसाध्ययोरपि। तथा च नियतानि चत्वारोत्यादि चित्राधिकरणे कौस्तुभे स्पष्ट । तत्र च रथ न्तरपुरस्कारेण केचिद्धर्म्मा विहिता । रथन्तरे प्रस्तूयमाने सम्मीलि नोच्चैर्गेयमित्यादय । केचित्तु बृहत्पुरस्कारेण बृहति प्रस्तूयमाने समुद्र मनमाध्यायेदुच्चै गेयमित्याद्या । तत्रोभयत्रापि साम्न ऐकविध्य मेव नतु निमित्तत्व उच्चैस्त्वादिप्रायपाठात्। ते किमुभयत्राऽपि सङ्कीर्णा उत व्यवस्थिता इति चिन्तायां सत्यपि स्तोत्रभेदे तज्जन्या दृष्टस्य लाघवादेकजातीयस्यैव कल्पनादेकापूर्व्वसाधनीभूतार्थत्वेन धर्म्माणामवघातादिवत् सङ्कर । तद्धानयो प्रयाजानुयाजवत् समु च्चयो येनाऽदृष्टवैजात्यमावश्यक स्यात्। अतएव विकल्पवचनस्याऽपि अदृष्टत्वे एव तात्पर्य्यमित्यपि सुवच। अन्यथाऽपूर्व्वस्यैकत्वात्तत्त स्तोत्रसम्बन्धोय स्वरूपेण प्रवेशाद्युक्तो धर्म्मसङ्कर । अतएव रथन्तरस्य "अभित्वाशूर" त्यस्यामृच्युत्पन्नत्वेन शूरादिप्रकारस्य "बृहतस्त्वा मिथिहवामहे" इत्यस्यामुत्पन्नत्वेन आवाहनादिप्रकारस्य च भेदेऽपि न प्रवेश । अस्य ऋक्साधनताप्रकारत्वेन सामसाधनताघटकत्वा भावाच्च न हि ऋगर्थभेदेऽपि साम्नोऽक्षराभिव्यञ्जकता भिद्यते कस्य रथन्तरे प्रकारद्वयस्याऽप्यभावेन धर्म्मापाश्यनापत्तेश्च। अतएव केपुचि

त्वात् तस्य चाऽसंस्कार्यत्वादारादुपकारकयोर्गुणफलयोर्नातिदेश। यदि तु कालस्यापि कर्माङ्गतयोपयोगात् स्मृतिबलेन सर्वादी मत स्यापि पुनरकालत्वसम्भावनानिमित्तकायदापरिहारार्थं कर्म यदेव स्मरणोपपत्ते सामवायिकत्वलाभाय कालसंस्कारत्वमिष्यते। तथाऽपि विकृतौ तत्कालीनायामनिदेशे बाधकाभावादन्यकाली नायामपि पशुपुरोडाशादिवदूहेनाऽतिदेशोपपत्तेर्न काचित् क्षति। यत्तु पार्व्वणशब्दस्य पूर्णादिदीनवाचित्वादधिकरणव्युत्पत्त्या काल वाचित्ववद्भावव्युत्पत्त्या कर्म्मवाचित्वस्यापि सम्भवात् प्रकरणात् कर्म परत्वमेव। तथाऽपि पर्व्वशब्दवाच्यस्याऽऽग्नेयादिसमुदायस्य विकृतावपि देवतात्वसम्भवादारादुपकारयोरनयोरतिदेशे न किञ्चिद्बाधकम्। यदि तु सन्निपत्योपकारकत्वलाभाय देवतासंस्कारकत्वमिष्येत। तथाऽपि पर्व्वत्वस्य दानत्वापरपर्यायस्य प्रत्येकमाग्नेयादिवृत्तितया समुदायवृत्तित्वाभावादपूर्व्वसाधनरूपेणाऽऽग्नेयादीनां प्रत्येकमेवो द्देश्यत्वावगतेर्द्वैविरभिमर्शनमन्त्रवद्विकृतावतिदेशोपपत्ति।

न च तत्र शब्दत एव हविषामुद्देश्यत्वावगतेरुद्देश्यसाहित्यस्य चाऽविवक्षितत्वाद्युक्तोऽतिदेश। प्रकृते तु तद्धितशब्देन देवतात्वेन तेषामुपादानात् साहित्यविवक्षोपपत्त सत्यपि वैयधिकरण्येनोद्देश्य वाचकपदान्तरकल्पनयाऽऽग्नेयादीनां प्रत्येकमुद्देश्यत्वे उपादेयता दशायां विवक्षितसाहित्यानामाग्नेयादीनामेव देवतात्वावगमाद्विकृतौ च तेषामनुपयोगित्वेन संस्कार्यत्वानुपपत्तेर्देवतासंस्कारकयो पार्व्वण होमयोरनतिदेश इति वाच्यम्। उद्देश्यसामर्थ्यानुरोधेनाऽऽग्नेया दीनामपि अपूर्व्वसाधनत्वेनैव रूपेण देवतात्वावगतेर्विकृतावपि

अवश्यं वाच्यम्। तत्र च विजातीयस्तोत्रजनकतावच्छेदकतया
संस्कारेष्वपि वैजात्यावश्यंभावाद्दोहनीयावाऽनियमन्यायेन तत्तत्
संस्कारसमूहप्रयुक्ता एव तत्तद्धर्मा इति न प्रकृते साङ्कर्यम्। कण्व
रथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकतयैव
ऋगन्तरजन्यमानदशमस्यके गुणाभिधानव्यक्तिविधानात्तत्तत्संस्कार
प्रयुक्तधर्मप्राप्त्युपपत्तिरिति सर्वमनाकुलम्। ८।२।१२।

॥ अप्राकृते ॥ वैश्यस्तोमे कण्वरथन्तरपृष्ठं भवती"ति श्रुतम्।
तत्र प्रकृतौ बृहद्रथन्तरयोरिव पृष्ठसामाधिकरण्यात् पृष्ठपदसमानाधि
करणसामत्वसादृश्येन होतुः पृष्ठ एव निविशते न तु मैत्रावरुणादि
पृष्ठेष्वितीति तत्रैव कौस्तुभे स्पष्टम्। अस्य बृहद्रथन्तरविकारत्वात्तद्धर्म
प्राप्तिरपि पूर्वाधिकरणोक्तरीत्या चावादैव सा च किं समुच्चये
नोभयधर्मप्राप्तिः उत विकल्पेनेति चिन्तायां स्तोत्रद्वयजनकविजातीय
संस्कारसमूहाया प्रकृतौ तत्तद्दशमासादिमासयोर्भेदेन विकल्पेनोत्
पत्तावपि वैश्यस्तोमे कण्वरथन्तरतदाश्रयभूतऋगादिरूपसामग्र्ये
नैकस्मिन्नेव सप्तदशसङ्ख्यके संस्कारसमूहे तज्जन्यगुणाभिधानसमूहा
लम्बने च वैजात्यद्वयाभिव्यक्तौ बाधकाभावात् प्रयोजकद्वयसत्त्वे
नाऽविरुद्धसमग्रोत्तरधर्माणां समुच्चयो विरुद्धवैसत्त्वादीनां तु विकल्प
इति प्राप्ते।

भाष्यकारेण तावदिष्टापत्त्यैव समाहितम्। वार्त्तिककारस्तु पृष्ठ
द्वयजन्यापूर्वस्यैकजातीयत्वेनाऽतिदेशेनेह प्राप्तौ तत्साधनत्वेन विकल्पे
नैव पृष्ठस्तोत्रद्वयस्य तत्साधनीभूतसंस्कारसमूहद्वयस्य च प्राप्त
स्तादृशसाधनत्वेनैव चोपदिष्टयोः कण्वरथन्तरादिसामतद्द्वयोर्विकल्प

च्छेदककोटौ साहित्याद्यविवक्षायामपि उत्तरकालप्रतियोगित्वे उपादेयत्वाद्दर्शपूर्णमासाभ्यामिष्ट्वे"ति तद्विवक्षा ।

अतश्च सोमे विकृत्युत्तरत्वप्रसङ्गवत् सौर्यादावपि पौर्णमास्युत्तरत्वाभावान्नाऽतिदेशप्रसङ्ग । अन्वारम्भणीयायां तु साहित्यादेरविवक्षा दर्शपूर्णमासयोरुद्देश्यतावच्छेदककोटिप्रविष्टत्वादिति युक्तस्तस्यामतिदेश । प्रकृतौ पार्वणहोमयोस्तु आश्रयिकर्मत्वेन परप्रयुक्तदेवतोपजीवित्वात् स्वरूपेणाऽऽग्नेयादीनां देवतात्वानुपपत्तेर्युक्तएवाऽतिदेश । यत्तु समुदायापूर्वप्रयुक्तत्वात् पार्वणहोमयोर्विकृतौ च सौर्यादौ तदभावादनतिदेश इति । तन्न, एवमपि वैश्वदेवादिपर्वणि तत्प्रसङ्गेनाऽतिदेशापत्ते । प्रयाजादेरपि तत्प्रयुक्तत्वेन सौर्यादावनतिदेशापत्तेश्च । न हि प्रयाजादीनां प्रकृतौ परमापूर्वप्रयुक्तत्वं हि कारणानापत्ते । अपि तु समुदायापूर्वप्रयुक्तत्वमेव ।

अथ तत्र प्रयोजकता न समुदायापूर्वत्वेनाऽपि तु उत्पत्त्यपूर्वाव्यवहितापूर्वत्वेनेति तथा सौर्यादावतिदेशस्तत्र पार्वणहोमयोरपि तुल्यमिति चेत्। सत्यमेव। तथाऽपि कथमपि याज्ञिकानां विकृतौ पार्वणहोमानुष्ठानादाचारस्यैव प्रकृतौ साहित्यस्याग्नेयत्वादेश्चोद्देश्यतावच्छेदककोटौ विवक्षा न सौहित्यादिविवक्षेत्येव तात्पर्यग्राहकत्वात्तस्य च विकृतावभावादनतिदेश पार्वणहोमादीनां । अतएव नाऽऽचारेण तत्तद्विकृतिपर्युदासरूपेणाऽनन्तश्रुतिकल्पनागौरवापत्ति । सूत्राण्यप्याचारमेवोररीकृत्य समुदायार्थतारूपहेतुपरतया व्याख्येयानि ।४।२।१४।

॥ उभयो ॥ अन्यथा कर्मभेदावगतेरेकवाक्योपात्तकर्मद्वयस्याऽपि

चिन्तयेति द्रष्टव्यम्। वस्तुतस्तु तेषु तत्र बृहद्रथन्तरे भवत इति प्रकृत्य "पवमाने रथन्तरं कुर्य्याद्बृहत् पृष्ठं भवती"ति पञ्चविंशब्राह्मणानुरोधेन लाट्यायनिकस्य रथन्तरस्य पवमानस्तोत्रे निवेशाभिधानात् पृष्ठस्तोत्रे उभयोः साम्नोर्वा एकस्मिन् कालानुभयोः पृष्ठस्तोत्रयोः समुच्चयः। अतएव पवमानेऽपि रथन्तरं विधीयमानं न सम्मीलनादीन् धर्मान् गृह्णाति रथन्तरस्य तैर्विनाऽपि जायमानत्वेन रथन्तरस्वरूपे आनर्थक्यादपूर्व्वसाधनत्वलक्षणाया पृष्ठजनकसंस्कारसमूहसाधनत्वस्यैव लक्षणीयत्वात्तदभावे यूपावटस्तरणबर्हिर्वदप्राकृतकार्य्यापन्ने रथन्तरादावप्राप्तेः। अतएव यैर्विना रथन्तरमेव पठितुं न शक्यं यथा स्तोभादिभिस्तत्वेतरातिपक्षत्वे प्रमाणाभावाद्यदा तदात्मकभूता ऋचोऽपि ऋगन्तरग्राहकप्रमाणाभावे आक्षिप्येरन्। तदा तदङ्गभूतस्तोभादौ तु "प्रधाने नीयमाने हि तदाङ्गान्यपकर्षती"ति न्यायेनाऽनुष्ठाने न काचित् क्षतिः। अत सत्वमपि गतार्थवाक्यमध्ये स्तोत्रान्तरे विनियोगाभावे चेदमधिकरणं द्रष्टव्यम्।८।२।१४।

॥ पार्व्वणहोमयोः ॥ दर्शपूर्णमासयोः "स्रुचेन पार्व्वणौ होमौ जुहोती"ति श्रुतम्, तत्र संज्ञाभिन्नकर्म्मद्वयं सुपर्व्वदेवताविशिष्टं विधीयते। न च हवि समभिव्याहाराभावाचाऽयं देवतानिर्देशः। सम्बन्धसामान्यवाचिन एव योग्यतया देवतात्वपरत्वोपपत्तेः। तदिदं होमद्वयं विकृतावतिदिश्यते न वेति चिन्तायां प्रयाजादिवदतिदेशः। न च पर्व्वशब्दवाच्यकर्म्मसमुदायस्यैवाऽत्र देवताभूतस्योद्देश्यत्वेन संस्कारात्तस्य च विकृतावभावाचाऽतिदेश। पर्व्वशब्दस्य काले मुख्यतया कर्म्मणि लक्षणाङ्गीकारे प्रमाणाभावात्। अतोऽत्र कालस्यैव देवता-

प्रयोगानुपपत्ते । न च पूर्णमासादिशब्दस्य पार्व्वणहोमयोर्देवतात्वेऽपि तदर्थस्याऽपि आग्नेयादिवद्देशागविषयशब्दप्रतिपाद्यत्वसम्बन्धेनोद्देश सम्बन्धित्वात् पार्व्वणहोमसंस्कार्य्यत्ववदिहाऽपि समिदादिपदस्य देवतात्वे तत्प्रतिपाद्यस्याऽग्ने संस्कार्य्यत्वोपपत्तिरिति वाच्यम। तथात्वेऽपि 'समिधोऽग्न आज्यस्य व्यन्तु तनूनपादग्न आज्यस्य वेत्त्वि"त्यादिमन्त्र वर्ण्यमाने सम्बोधनेन ततो भिन्नस्यैव समिदादिपदार्थस्य क्रियान्वय प्रतीते समिदादिपदस्याऽग्निप्रतिपादकत्वाभावात् अग्निसंस्कारकत्वे पञ्चावत्तिदेशानुपपत्तेश्च । अस्त्वितरप्रयाजानामारादुपकारकत्वेऽपि समिद्यागस्य सामिधेन्यङ्गभूतसमित्संस्कारकत्वमिति । तन्न । तथात्वे "यो वै प्रयाजानां मिथुनं वेद समिधो बह्वीरिव यजतो"ति लिङ्गानु पपत्ते । अत्र हि इवशब्देन वस्तुतो बहुत्वाभावेनाऽरोपितं बहुत्वमिति सूच्यते । न च तत्समिन्धनाङ्गसमित्सु युज्यते वस्तुत एव तासां बहुत्वात् । आरादुपकारकत्वपक्षे तु सत्यपि बहुवचनान्तसमित्पदस्य देवतात्वे प्रातिपदिकमात्रवृत्तेनैकत्वस्य समित्पदार्थस्य सिद्धो लिङ्ग वचन युक्तो बहुत्वारोप । तस्माच्चत्वारोऽपि प्रयाजा आरादुपकारका एवेति न विकृतावूहितव्या । ९ । २ । १६ ।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

नवमस्य द्वितीयपाद ।

---

देशोपपत्तेः । इतरथा स्वाहाकारपशुपुरोडाशादावपि अग्नाग्नी षोमत्वादिनैव देवतात्वोपपत्ते सौर्य्यसवनीयादौ तेषामतिदेशा नापत्तिः ।

इदञ्च सर्व्वं तद्धितस्य देवताविधायकत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु विशिष्टविधौ गौरवापत्तेः एवं समभिव्याहाराभावेन च देवतातद्धि-तत्वानिश्चयात् पर्व्वणि भवौ पर्व्वसंस्कारकौ वेलेवमपि तद्धितोपपत्तेः यौग्यतयाऽपि तदवधारणायोगाच्चाऽत्र देवताविधि

मन्त्रवर्णादेव तु क्रमावगताङ्गभावादेवतामासिसिद्धेः पार्व्वणपद नामधेयमेव । अतएव याज्ञिकाना "अग्नय चाऽजिन यथ पूर्णमास यजामहे । अमावास्या सुभगा सुषेवे" ति मन्त्रगतपूर्णमासामावास्या शब्दयोरेव त्यागवेलायामुदेशो न तु पर्व्वशब्दस्य । एवञ्च तत्रत्यपूर्ण मासामावास्याशब्दयोः काले प्रयोगाभावाच्चत्वाग्यपर्य्यालोचनया कर्म्मपरत्वावगतेरेकैकस्याऽऽग्नेयादिविकसंस्कारकत्वेऽपि पूर्व्वोक्त रीत्यापशुपुरोडाशादिवत् सौर्य्यादावतिदेशे बाधकाभाव । न हि उद्दे शाश्रय प्रयोजकसत्त्वे परप्रयुक्तदेवतोपजीवित्यागाशे स्वरूपेणाऽऽग्नेया देर्देवतात्व सम्भवति । अतो येनैव अपूर्व्वसाधनविशेषरूपेणोद्देश्याय प्रति संस्कार्य्यता, तेनैव रूपेण त्यागाश प्रतिदेवतात्वमिति युक्त एव पशुपुरोडाशादेरिव पार्व्वणहोमयोरप्यतिदेश । एव वैमृधेऽपि येनैव रूपेणाऽपूर्व्वसाधनविशेषत्वादिना पौर्णमास्या उद्देश्यता, तेनैव रूपेणोत्तरकालप्रतियोगित्व दृष्टार्थत्वात्तु समुदिताग्नेयत्वादिरूपे णेति तद्देश्यतावच्छेदककोटौ सर्वाहत्यस्याऽऽग्नेयत्वादेर्याऽविवक्षित त्वादुक्त एव वस्तुमपि विकृतावतिदेश । वस्तु या तत्रोद्देश्यताय

तदवच्छिन्नस्योद्देश्यत्वेऽपि मन्त्रान्तर्गतव्रीह्यम्न्यादिपदे लक्षणाया प्रमाणाभावात । अतएव तादृशवाधेनाऽपि प्रोक्षणजन्यादृष्टविशेष एव द्रव्यदेवतादौ संस्कारो जन्यते न तूद्देश्यतावच्छेदकोऽप्यपूर्व्व साधनत्वे । अतश्चोपकारकदृष्टभावेन द्वारस्य शक्तिजन्यबोधस्य विकृतावनिर्देशे तत्पृष्ठभावेन प्राप्यमाणस्याऽग्न्यादिपदस्य सौर्य्यादौ बाधात् द्वारीभूतश्च पदान्तरप्रक्षेपो युक्त एव ।

अतएवाऽग्निव्रीह्यादिपदानामवघातादिवत् तत्त्वेनैव रूपेण प्रकृतौ नियतकार्य्यजनकत्वेन विधानेऽपि तत्कार्य्याभाव इव तत्कार्य्यस्य तेन कर्त्तुमशक्यत्वेऽपि युक्त एव तस्य विकृतौ लोपः । तत्र लेशतावान् विशेषः । कार्य्याभावे लोप एव । अशक्यत्वे तु तज्जनकोपायान्तरानुष्ठानमिति ।

यत्तु मूले प्रकृतावेव नोपायस्य तत्त्वेन विधेयता । अपि तु अपूर्व्वसाधनविशेषोपायत्वेन इतरथा अदृष्टार्थत्वापत्ते । अत श्चाऽग्न्यादिपदस्य स्वरूपेणाऽविवक्षितत्वाद्युक्त एव पदान्तरप्रक्षेप इति । तन्न । तथात्वे प्रकृतावेव व्रीहिपर्य्यायाणां दलनादेश्चाऽनुष्ठाने वैगुण्यानापत्तेः । येनैव रूपेण मुख्यकार्य्य प्रति जनकता तेनैव रूपेण नियमादृष्ट प्रत्यपि जनकत्वौचित्याच्च । यच्च अग्निपदेन शब्दरूप देवताप्रकाशनार्थं लक्षणावश्यम्भाव इति । अत्र ब्रूमः । सत्यामपि लक्षणायां येन स्वशक्यवाचकत्वसम्बन्धेन प्रकृतौ शब्दलक्षणा न तेनैव सम्बन्धेन विकृताविति द्वारभेदाद्युक्त पदान्तरप्रक्षेप ।

वस्तुतस्तु शब्दस्य देवतात्वेऽपि अपूर्व्वीयदेवतारूपशब्दवाचकत्व सम्बन्धेनाऽर्थस्याऽप्यपूर्व्वसम्बन्धात् प्रकाश्यत्वोपपत्तेर्न मन्त्रान्तर्गता

सन्निधानादवान्तरप्रकरणाद्वा एकैकमन्त्रं प्रति शेषित्वावगतेः कर्मद्वयस्याऽपि पूर्णमासदेवताकतया तत्संस्कारकत्वम् अमावास्यादेवताकतया चाऽमावास्यासंस्कारकत्वं प्रधानद्वयानुरोधेन च मन्त्रद्वयस्याऽपि तत्र तत्राऽऽवृत्तिः । एकपदोपादानावगतकर्मद्वयसाहित्यबलाच्च सकृत् स्मृतस्याऽपि पुनः स्मरणं "तावत्तुभि"रितिवत्ताऽनुपपन्नम् । तत्र च यथाक्रमं पाठो येनैकस्य कर्मण एक एव मन्त्रोऽङ्गं भवेत् । एकपदोपादानात् तु उभयोरप्युभयाङ्गत्वं अत एव नाऽत्र सूक्तवाकविभाग इति प्राप्ते । "समसंख्याङ्गप्रधानविषये यथाक्रममेव सम्बन्ध" इति न्यायस्यौत्सर्गिकत्वादेकस्य प्रधानस्यैकेनैव मन्त्रेण निराकाङ्क्षत्वाच्चाऽऽवृत्तमन्त्रावृत्तिकल्पने पुनःस्मारकाकाङ्क्षाकल्पने च प्रमाणाभावादेकस्यैकसंस्कारार्थत्वमेवेति प्रयाजनवत्वादिभागः । ८ । २ । १५ ।

॥ प्रयाजेऽपीति चेत् ॥　　समिदादीनां चतुर्णां प्रयाजानां यदि समिदादिपदैर्देवतायास्तेविष्णु यजतीतिवद्देवताविधिर्यदि वा विशिष्टविधिगौरवापत्तेर्मन्त्रवर्णादेव समिदादिदेवताविधिवत् पात्नीवतस्यन्तु समिदादिपदं देवतानुवादानामधेयमेव वा　सर्वथा सन्निपत्योपकारकत्वलाभाय तत्तद्देवतासंस्कारार्थत्वमेव पात्नीवताम साक्षात्कारोत्तमानुयाजादिवत् । न च समिदादीनामुपभोगाभाव । वेदे सर्वत्र समिदादिपदानामग्निसामानाधिकरण्यदर्शनेनाऽग्नेरेव उपयोगसम्भवात् समिध्यमानस्यैव वा समिन्धनादावुपयोगसत्त्वेन तस्यैव सन्निपत्योपकारकत्वमितिप्राप्ते । सत्यपि वेदे समिदादिपदानामग्निपदसामानाधिकरण्ये इन्द्रमहेन्द्राधिकरणन्यायेन समिदादिपदैस्तत्प्रकाशनानुपपत्तेः । शब्दस्य देवतात्वेन तद्वेदे पदान्तर-

पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वाद्दर्भपदस्थाने ऊहितेन पुण्डरीकपदेनैव तन्निष्ठगुणप्रकाशनोपपत्तेर्न पुनः पदान्तरेण प्रकाशनापेक्षा। अतो हरितपदस्य लोप एव नतु तत्स्थाने पदान्तरप्रक्षेप इति प्राप्ते।

विधौ श्रुतस्य पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वेऽपि प्रकृते दर्भादिपदस्य *जातिमात्रवाचित्वात् तन्मात्रप्रकाशनाय* जातिमात्रवाचकस्य पद्मादिपदस्यैव दर्भादिपदस्थाने ऊहितत्वात् प्रकृतविव पदान्तरेण गुणप्रकाशनाय हरितपदस्थाने पुण्डरीकपदगम्यनिष्ठगुणवाचिपदान्तरोह आवश्यक एव। तत्र यद्यपि पुण्डरीकं सिताम्भोज"मिति त्रिकाण्डीयस्मरणात् सितपदं प्रसज्यते, तथापि "यथाक्ष्याम पुण्डरीकमवर्मचिणो" इति वेदप्रयोगात् पुण्डरीकाक्ष इत्यादौ रक्ताम्भोज एव शास्त्रस्थानां पुण्डरीकपदप्रयोगाच्च रक्ताम्भोजस्यैव विधेयत्वेन रक्तपदमेवोहितव्यम्। शास्त्रदीपिकायान्तु दर्भपदस्थाने पुण्डरीकपदोहवत्। अत पाथमारयरक्तगुणस्याऽपि तेनैव *प्रकाशनाय रक्तपदोह* मिश्रदिति ध्येयम्। ९। ३। २।

॥ मौक्तिके ॥ दैवे पर्वी "यूपो यज्ञस्य दुरिष्टमामुञ्चत यद्युपस्यैव यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपोनोपस्पृश्योऽयद्येक यूपमुपस्पृशेदेष ते वायो इति ब्रूयाद्यदि द्वावेतौ ते वायू इति, यदि बहूनेते वायव" इति श्रुतम्। तत्र यूपस्य प्रकरणादिना प्राप्तत्वात् तत्तत्सङ्ख्याकस्पर्शपर्वेद मन्त्रविधानमित्यविवादम्। स्पर्शः पर विहित अविहितो वेति चिन्तायां प्रकरणादस्पर्शप्रतिषेधेष्टिन्यायेन च विहितस्पर्शाङ्गतया तन्निमित्तकतया वा नैमित्तिकमिदं कर्माऽङ्गतया

# भाट्टदीपिका।

## नवमाध्याय।

### तृतीयपाद।

॥ प्रकृतौ ॥ "अग्नेरहं देवयज्यया व्रीहीणां मेधे"त्यादिमन्त्रेषु समवेतार्थत्वादियुक्तिबलेन अग्निव्रीह्यादिपदानां सौर्य्यनीवारादिषु द्वारान्तरसम्बन्धनिमित्तान्यथाभावात्मक ऊह सिद्ध एव प्रोक्षणादिवत्। तद्द्वीन पदान्तरप्रक्षेपात्मको भाक्त ऊह अयमर्थसिद्धोऽप्याक्षिप्य समाधीयते। प्रकृतौ हि अग्निव्रीह्यादिपदेनाऽग्निव्रीह्यादीनां लक्षणयैवाऽपूर्व्वसाधनत्वेन रूपेण प्रतिपादनात् सौर्य्यनीवारादीनामपि तेनैव रूपेण प्रकाशनत्वोपपत्तेर्न पदान्तरप्रक्षेपो युक्तः। अतएव पाशानिति बहुवचनान्तस्य मन्त्रस्य प्रकृतावेकपाशकाया विकृतावपि लक्षणयैवैकत्वप्रकाशकत्वाबोधः। नन्वग्निव्रीह्यादिपदं शक्त्या अपूर्व्वसाधनीभूतद्रव्यदेवतादिपरं अपि तु लक्षणयैव। "शक्यादन्येन रूपेण भाने भवति लक्षणे"ति न्यायात्। विशेषतस्य शब्दस्यैव देवतात्वात्तस्य चाऽग्निपदेन लक्षणयैव प्रतीतेः सौर्य्यस्याऽपि तथैव प्रतीतिसिद्धो नोहसिद्धिरितिप्राप्ते।

सत्यप्यपूर्व्वसाधनत्वस्य प्रकृतावुद्देश्यतावच्छेदकत्वे अग्निव्रीह्यादिपदेन स्वशक्तिजन्यबोधद्वारा अपूर्व्वसाधनीभूतद्रव्यदेवतादि सत्कर्य्यादित्यर्थोऽवगम्यते। अतएव शक्तिजन्या बोधोऽपि व्रीहित्वाग्नित्वादिप्रकारक एव न त्वपूर्व्वसाधनत्वप्रकारकः। लिङ्गक्रमश्रुतिवाक्ये

अतएव यज्ञस्यैव यूपनिष्ठदोषजनकत्वाद्यज्ञात् पूर्वं कारणाभावेन अशुचित्वापरपर्य्यायदोषाभावात् क्रतुमध्यगतलौकिकस्पर्शेऽपि न दोषः। अतएव "यूपचित्याद्युपस्पर्शने स्नाया"दिति स्मार्त्तमपि प्रायश्चित्तं बहिः क्रतुविषयमेव। निषेधस्य मूलान्तराकल्पनात्। अस्तु वा तस्य सामान्यविषयत्वादन्तः क्रतुगतलौकिकविषयत्वमपि। सदा तु ऋत्विक्कर्त्तृको विहितोऽपि स्पर्शो ग्रामित्वव निषेधविषय एव तमतिक्रम्य प्रवृत्तस्याऽऽर्त्विज्यविधानोपपत्तेः। सर्वथा यूपकार्य्यापवर्गं यावाऽय पुरुषार्था मन्त्रपाठः। अतएव निषेधवाक्यप्राप्तयूपमनूद्य मन्त्रवर्णमिदं स्वतन्त्रमेव तत्तत्मध्याकस्पर्शे निमित्ते तज्जन्यदोषाभिघाताय विधीयते। नतु कथित् कस्यचिदूह इति सिद्धम्। ८।३।१।

॥ अन्याय ॥ दैवपशुपाशप्रमोचनेऽनुमन्त्रणद्वयमाम्नातम्। "अदितिः पाशं प्रमुमोक्त्वेत"मित्येकवचनान्तमेकं। "अदितिः पाशान् प्रमुमोक्त्वेतान्"इति बहुवचनान्तमपरं। तत्राऽन्यस्याऽपि विकल्पेनैकपाशकायामेव प्रकृतौ निवेश इति वक्ष्यते। तदेतन्मन्त्रद्वयं द्विपशुकायां विकृतावतिदेशेन प्राप्तं तत्रैकवचनान्तस्य तावत् प्रकृतावेव समवेतपाशमात्रप्रकाशकत्वाद् द्विवचनेनोह इत्यविवादमेव। न च प्रतिपाशमोचनमस्य ह्रासेरनूह शक्यः। अस्याऽनुमन्त्रणमन्त्रत्वेन तन्त्रेणैव प्रयोगात्। बहुवचनस्य तु प्रकृतावसमवेतार्थकत्वेन अदृष्टार्थं वा साधुत्वार्थं वा प्रयोगाद्विकृतावनूहः।

अस्तु वा लक्षणयाऽप्यर्थप्रकाशकत्वे सम्भवति साधुत्वाद्यर्थकत्वस्याऽन्याय्यत्वाद्बहुवचनस्यैकत्वलक्षणार्थत्वम्। तथाऽपि स्वशक्या

ऽन्यादिशब्द शब्दलक्षणेति युक्तो व्रीहिपदइव पदान्तरप्रक्षेपः। अतएव सर्व्वैव तत्प्राप्तौ "पूयति वा एतद्वचोऽक्षरपदेन यदूहति तस्मादूहेच नोहे"दिति ऋगन्तरोहपर्य्युदासोऽपि सङ्गच्छते। अतएव तत्कार्य्यप्रकाशनार्थं तत्प्रकाशनसमर्थऋगन्तरोहएव कार्य्यो वैदिकत्वसामान्यात्। तदसम्भवे लौकिकवाक्योह तथा "न मातृ-मन्यता"मित्याद्यध्रिगुप्रैषे मात्रादिशब्दोहप्रतिषेधोऽपि "न माता वर्द्धते न पिते"त्यादिरूपोऽन्योहलिङ्गम्। यद्यपि च नाऽय प्रतिषेधविधिर्न्यायप्राप्तत्वादित्युक्तम् मन्त्राधिकरणे कौस्तुभे। तथाऽपि नित्यानुवाद एवाऽयमन्यवोहलिङ्गम्। नचोहस्य न्यायसिद्धत्वे विकृतिविशेषे "विशिष्टां देवानामुस्राणां वपानां मेदसोऽनुब्रूहि" चतसृषु छागस्य वपाया मेदसोऽनुब्रूहो"त्यादिमन्त्रपाठवैयर्थ्य तस्य मन्त्रभ्रेषप्रायश्चित्त-प्राप्तिफलकमन्त्रत्वमिहार्थत्वात्। ८। ३। १।

॥ ज्ञाति ॥ मोक्षचर्यां "पौण्डरीकाणि बर्हींषि भवन्ती"ति श्रुतं। अत्र बर्हिःपदेन तत्कार्य्याणि हविरासादनवेदिस्तरणप्रोक्षपदन-पवित्रकरणादीनि लक्षयित्वा तदुद्देशेन पुण्डरीकाणि विधीयन्ते। जन्यत्वसम्बन्धाश्रयणात् तदिति। तत्र वेदिस्तरणे प्रकृतिप्राप्ते "स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरमुपशयाना * दर्भं स्तृणीतहरितं सुपर्णाः निष्का इमे यजमानस्य ब्रध्न" इति मन्त्रोच्चार्य्ये बर्हिःपदे दर्भपदे चाह्नितव्य एव हरितपदेऽपूरितव्यो न वेति चिन्तायां गुणस्य प्रकृतावविहितत्वेन तत्प्रकाशकपदस्याऽसमवेतार्थत्वादनूहः। कथञ्चिल्लाक्षणिकगुणविधिकल्पनया वा समवेतार्थकत्वेऽपि इह

* अपामि वा हिंसीरिति आदर्शान्तरे पाठः।

षड्लिविन्यासोप्यनाशङ्का मन्त्रपदान्तराणामर्थबोधकत्वानापत्तेः । अतएव बहुपाशकस्थले बहुवचनप्रयोगेऽपि न तस्य मन्त्रस्य प्रकृतौ निरूढलक्षणया एकत्वप्रकाशक एव तस्मिन्मन्त्रत्वात् इह प्रतया बहुत्वप्रकाशके तस्मिन्मन्त्रत्वानुपपत्तेः । ८ । ३ । ५ ।

॥ विप्रतिपत्तौ ॥ बहुवचनान्तपाशमन्त्रस्य दैक्षएव निवेशमङ्गो सत्य विप्रतायुद्दयिन्मित । स एव लिङ्ग चिन्त्यते किं बहुपाशकाया मुत्कर्ष उत दैक्ष एव निवेश इति । तत्र बहुत्वप्रकाशनलिङ्गादनुष्ठान मादेश्यादेर्बाधे पूषानुमन्त्रणादिवद्विकृतावुत्कर्षः । न च तद्वत सामान्यसम्बन्धबोधकप्रमाणाभावः । ज्योतिष्टोमसत्रप्रकरणस्यैवा नर्थस्यतदङ्गन्यायसङ्कलनस्य क्रतुपशुषु सामान्यसम्बन्धबोधकस्य सत्त्वात् । नचैवमपि पाशप्रातिपदिकार्थस्य पाशस्य द्वितीयार्थस्य कर्मत्वस्य प्रमोचनभावनायाश्च प्रधानभूताया दैक्षेऽपि सम्भवेन तत्प्रति पादकानां लिङ्गविरोधाभावेनाऽनुष्ठानसादेश्यादिबाधे प्रमाणाभावाच्च गुणभूतबहुवचनमात्रानुरोधेनोत्कर्षकल्पना युक्तेति । वाच्यम् । अने केषामपि पदानामक्षत्वोच्चाद्यादिपदानुरोधेन व्रीहिप्रयोग एव सङ्कोच वदुत्कर्षस्याऽप्युपपत्तेः । इतरथा एकगुणपदानुरोधेनेतरपदाना मुत्कर्षानापत्तेश्च । गुणभूतलिङ्गानुरोधेन प्रातिपदिकादेरपोषवर्ज्य सङ्कोचवद्गुणभूतवचनानुरोधेनाऽपि तदुत्कर्षापपत्तेश्च प्रातिपदि कार्थप्रमिङ्गसङ्ख्यादेरपि कारकएवाऽन्वयेन प्रातिपदिकार्थं प्रति सङ्ख्यादेर्गुणत्वे प्रमाणाभावाच्च । एवञ्चैकवचनान्तपाशमन्त्रेण विकल्पोऽप्यष्टदोषदुष्टो न भवेदितिप्राप्ते ।

नोत्कर्षः । गुणभूतबहुवचनानुरोधेन प्रधानभूतानां बहूनां

विधीयते। नह्येतद् दोषनिर्घातार्थं येन विहिते तदभावादप्रवृत्तिः। यज्ञस्य विहितत्वेन अरिष्टजनकत्वासम्भवेनाऽर्थवादमात्रत्वात्। यदि-त्वत्र स्पर्शनिषेधाधिक्याद्यादिशब्दोपादानात्स्वाऽन्यप्रतिपन्नेष्टिवैलक्षण्य-माशङ्क्येत। ततोऽस्त्वयं विहितस्यैव यूपान्वारम्भादेः स्पर्शस्य ग्रहणा-ग्रहणवत् पाक्षिकत्वमित्यर्थो निषेधः। तत्र च तत्कारणपक्षे ऽप्य-मन्त्रपाठोऽस्त्विति यदिमन्त्राविरोधः। यदि त्वष्टदोषदुष्टविकल्प-भिया निषेधस्य रागप्राप्तयूपस्पर्शविषयत्वमाशङ्क्येत, ततो निषेधस्याऽपि क्रतुमध्यप्रसक्तगमनागमनादिप्रयुक्तयूपस्पर्शविषयत्वेन "नाऽनृतं वदेत्-स्त्रियमुपेया" दित्यादिवत् क्रत्वर्थत्वोपपत्तेः। स्पर्शस्य क्रतुवैगुण्याभाव-कत्वावगमात् तत्प्रायश्चित्तत्वेनाऽयं मन्त्रविधिः क्रत्वर्थ एव।

एवञ्च यूपानेकत्वन्यायादेवैतेन "तेन" इत्याद्युक्तोभयत्वसिद्ध्यर्थं पुनः पठ्यते। नचैवमपि क्लृप्तमन्त्रपाठमात्रस्य प्रयोजनलाभेऽपि यदि हापयित्यादिविनियोगप्रयोजनाभावः देवमविधिपठितानां त्रयाणा-मेषां पाशाधिकरणन्यायेन तत्रैव विकल्पप्रसक्तावुत्कर्षसिद्ध्यर्थत्वा-दिति प्राप्ते।

वस्तुतो यज्ञस्य पापापरपर्यायदुरिष्टजनकत्वाभावेऽपि निन्दार्थवादे यज्ञप्रयोगजन्ययूपनिष्ठदुरिष्टस्य यूपस्पर्शकर्त्तरि सञ्चारसङ्कीर्त्तनेनाऽस्य निषेधस्य यज्ञप्रयोगसमाप्त्युत्तरकालीनत्वावगमात् पुरुषार्थस्यावगते-रस्याऽपि तद्दोषनिवारणार्थस्य प्रायश्चित्तस्य लिङ्गेन प्रकरणं बाधित्वा पुरुषार्थत्वमेव। अतएव सूत्रभाष्ययोः स्वारस्याद्यूपकार्य्यापवर्गोत्तर-मेवेदं प्रायश्चित्तं नतु वार्त्तिकादिस्वारस्यात् क्रतुमध्यगतलौकिकस्पर्शे-ऽपीति ध्येयम्।

प्रयोगयोस्तूहेनाऽतिदिश्यत इति युक्तं प्रयागयोः परस्पर प्रकृतिविकार भावे प्रमाणाभावात्। लिङ्गस्य वक्ष्यमाणरीत्या सर्व्वसाधारणत्वाच्च। यत्र हि उपदेशाम्यप्रापकप्रमाणस्यैकमात्रविषयत्वम् अन्यत्र च कार्य्यस्तूहेनाऽतिदेशत प्राप्तिस्तत्रैवोहः। न च प्रापकप्रमाणस्य सत्त्व विषयत्वं अत्र च प्राग्न्यायेन प्राप्तिघटिकादिलिङ्गस्य सत्त्वविषय त्वोपपत्तेरेकवचनानुरोधेन सहोवायोगात्वाऽस्य प्रापकप्रमाणस्यैकपत्नी प्रयोगमात्रविषयत्वम्। न च क्रतुपशूनां समानविधानत्वकाला चिन्तायां "प्रास्मा" इत्यस्य लिङ्गानुरोधेन मेषोवत्स सहोचवदिहा प्येकवचनानुरोधेन सत्त्वसहोचोपपत्तिरिति वाच्यम् विना कारणं पुलिङ्गस्य लक्षणायां प्रमाणाभावेन तत्र सहोचोपपत्तावपि प्रकृते सहोचे प्रमाणाभावात्। तस्मात् द्विबहुपत्नीकप्रयोगे एकवचनस्य लक्षणा। प्रत्येकव्यक्तिगतैकत्वाभिप्रायेण तदुपपत्तेः। यथैव हि शुक्लः घटः इत्यादौ शुक्लगुणस्य प्रत्येकवृत्तित्वेनाऽन्वयः। तथैवात्र त्याभिः इतन्यकत्वस्याऽपि प्रत्येकव्यक्तिवृत्तित्वेनाऽन्वये न बाधित् वति। नवैव "बहुषु बहुवचन मित्यस्यनुशासनस्य निर्विषयत्वा पत्तिः। बहुत्वस्य शाब्दबोधे विवक्षायां तदुपपत्तेः। नचैवं पशुना यजेतेत्यादौ द्वित्वग्रहणेऽपि बाधकाभावापत्तिः प्रथमातिक्रमे कारणाभावेनैकवचनस्यैकत्वपरत्वस्याहत्तिफलकत्वोपपत्तेः। अतश्च द्विबहुपत्नीकप्रयोगे एकवचनान्तस्यैव मन्त्रस्य प्रयोगोपपत्तेर्न तयोरूहो न वा "त्वोहोना सर्व"नित्वगोप इति सिद्धम्। ८। २। ७।

॥ विकृतौ ॥ एवं प्रकृतावेव समवेतार्थकत्वेन द्विबहुपत्नीप्रयो गयोरपि सत्त्वस्याऽविकारे सिद्धे विकृतौ द्विबहुपत्नीकप्रयोगयोरपि

यथावयवसन्यावयविहत्तिसख्यात्वसम्बन्धेन प्रकृताविकत्वलक्षणाया इव विकृता द्वित्वलक्षणाया अपि सम्भवादनूह । नचैव "निमित्त सुपाश्वि"त्यनुशासनेनैव विहितत्वात् न च दृष्टानुविधि श्छन्दसि भवतोत्यनुशासनात् प्रकृतावस्य दृष्टत्वेनैकत्वलक्षकत्वेऽपि विकृता वदृष्टत्वेन द्वित्वलक्षकत्वानुपपत्तिरिति । वाच्यम् । प्रकरणेन प्रकृतौ दृष्टत्ववदतिदेशेन विकृतावपि दृष्टत्वात् इतरथोत्कर्षेणाऽस्य मन्त्रस्योपपत्तेरेकत्वस्याऽपि लक्षणामापत्ते । अतो द्विपाशकायामपि विकल्पेन द्विवचनबहुवचनप्रयोग इति प्राप्ते—सत्य । निरूढ सम्बन्धेन द्वित्वे लक्षणासम्भवस्तथाऽपि सा किं "सुपाश्वि" इत्यनुशासनसिद्धतया निरूढलक्षणा वा स्यात् "गङ्गायां घोष" इतिवत् साम्प्रतिकी वा, नाऽऽद्य अनुशासनस्य "दृष्टानुविधि छन्दसो"त्यनेन यथैव पाठान्य इवेन तद्विषयत्वमेव नियतत्वात् । अन्यथा वैदिकप्रमाण प्रमितमात्रस्य दृष्टपदार्थत्वे विश्वजिति स्वर्गकामपदे ऊहादौ च छान्दसविधिप्रसक्त्यापत्ते । अतश्छान्दसविधे पठितमात्रविषयत्वात् विकृतावतिदिष्टमन्त्रे अप्रवृत्तेनाऽनुशासनिकनिरूढलक्षणया द्वित्वोपस्थितिरिति । ८ । २ । ४ ।

॥ नान्य ॥ अनुशासनाविषयीभूतेऽपि बहुवचनस्य लक्षणाद्वे कारे अनुशासनवैयर्थ्यापत्ते अस्तु वा मा । तथाऽपि प्रकृतौ यथा इत्थं एकत्वोपस्थितिर्न तथा विकृतौ द्वित्वोपस्थितिरिति प्राकृत हविराधानसंस्कारकस्य बहुवचनस्याऽपि बाधे द्वित्वप्रकाशनरूपकार्यानुरोधेन प्रकृतिवचनप्रक्षेपावश्यम्भाव । स्वाधीने शब्दप्रयोगे किमित्य वाचकं पदं प्रयोक्ष्यामहे इति न्यायात् । अतएव द्वित्वोपस्थित्यर्थम्

एवं नीवारपदघटितमन्त्रेऽपि प्रतिनिधौ मुख्यस्थानापत्त्यतिदेशे प्रमाणाभावात्। न च नीवारगतव्रीह्यवयवाद्वा व्रीहित्वजाति प्रमाणाभावेन तत्र कथं व्रीहिपदप्रयोगः। पुरोडाशप्रकृतित्वस्य पदार्थत्वेन व्रीहिपदवाच्यव्रीहित्वजातेः प्रकृतित्वायोगे व्रीहिपदेन लक्षणया व्रीहित्वसाधनतावच्छेदकत्वसम्बन्धेन व्रीह्यवयविन इव तदवयवानामप्युपादानेन नीवारगतव्रीह्यवयवानामपि प्रकाशनोपपत्तेः। व्रीहिभिर्यजेतेत्यनेन हि व्रीहित्वजातेः साधनता शब्देनोच्यते तदाश्रयावयविनस्तदवयवानाञ्च साधनता त्वर्थादाक्षिप्यते इत्युक्तं तृतीये।

वस्तुतः पुरोडाशस्य व्रीह्यवयवतण्डुलप्रकृतित्वस्यैव मुख्येन व्रीहिपदेन व्रीह्यवयवानामेव लक्षणाच्च। नीवारत्वादिकं त्ववयवावयविवृत्तिजातिरिति पूतीकगतसोमावयवेष्वपि साऽस्त्येव पूतीकगतविजातीयावयवबाहुल्यात् तु सा नाऽभिव्यज्यते। अतस्तत्राऽपि नोहः। यदि हि नीवारत्वादिना नीवाराणां प्रतिनिधौ साधनत्वं भवेत् तदा तेषां साङ्गप्रधानकर्मणामभावे कर्मविध्यादिप्राप्तानां संस्काराः ध्रुवतत्प्रवृत्तिकतया समानविधानत्वाभावाद्वेदपूर्वः।

वस्तुतस्तु तदाऽपि नीवारेषु व्रीहिधर्मातिदेशे प्रमाणाभावः। सत्यपि व्रीहिकार्यापन्नत्वे लौकिकधर्मग्रहणेनैव तेषां निराकाङ्क्षत्वाद्यूपावटस्तरणबर्हिषोर्वाऽतिदेशकल्पनानुपपत्तेः। अन्यथा यूपावटस्तरणेऽपि बर्हिःसाध्यत्वसादृश्यादतिदेशापत्तेः। फलचमसे तु "तमस्मै भक्षं प्रयच्छे"दिति लिङ्गादेवातिदेश इति वैषम्यम्। यदि तु द्रव्यमात्राभावे कर्मविधिमात्रालोचनयैव संस्कारविधिभ्यः पूर्वमेव

मुत्कर्षे प्रमाणाभावात्। विभक्त्युपात्तलिङ्गसंख्यान्वयित्वरूपसत्त्व-
प्रमाणानुरोधेन पार्ष्णिकान्वयवेनाया लिङ्गसंख्यादेः प्रातिपदि-
कार्थं प्रत्यप्राधान्येनैवाऽन्वयाच्च। नचैवं लिङ्गाद्यनुरोधेन प्रधान-
भूतपशुतदितरपदसङ्कोचस्याऽप्यनापत्ति गुणभूतानुरोधेन प्रधान-
भूतस्य सङ्कोचेऽपि प्रकरणादिबाधप्रसङ्गेनोत्कर्षे प्रमाणाभावात्।
सङ्कोचे प्रवर्जनीयतया नान्तरीयकप्रतिविधिबाधेऽपि उत्कर्षे नास्त
रीयकत्वाभावेन तद्बाधस्याऽन्याय्यत्वाच्च। यूपादिपदानान्तु गुण-
त्वाभावात् तद्व्यतिरेकेणेतरपदानां प्रकृतोपयोग्यर्थप्रतिपादकत्वा-
भावाच्चोत्कर्ष इति वैषम्यम्। प्रकृते तु पशुपाशकर्मकोन्मोचन-
मात्रप्रकाशनस्यैवोपयोगित्वात् संख्यायाः स्वरूपेण प्रकाशना-
नपेक्षत्वात् संख्यावाचकपदवैयर्थ्यपरिहाराय तस्य पाशसंख्या
प्रकाशनोपयोगकल्पनेऽपि नेतरपदानां तद्व्यतिरेकेण प्रकृतोप-
योग्यर्थप्रतिपादकत्वमिति विशेषः। अतएव बहुवचन "सुपाश"
स्त्वेव स्वगतबहुत्वाश्रयीभूतपाशावयवजन्यपाशरूपावयविद्वित्व-
सद्भैकत्वलक्षणायमेव।

एवञ्च फलमुख्यत्वादियमशिष्टोऽपि विकल्पो न दोषायेति
ध्येयम्। इतरयोत्कर्षपक्षेऽपि एकवचनान्तमन्त्रस्योहेन बहुपाश-
कायामप्यामिव कृतपशुष्वपि बहुवचनान्तलोपपक्षे तत्पाठक्रम-
मस्यत्वमावाभिरूपं मन्त्रं स्यात्। ८। १। ६।

॥ अपूर्वं ॥ अतएव दर्शपूर्णमासयोः "पशीमयद्य" लोकवचनान्तो
प्रजापतिपशौकप्रयोगत्वं द्विवचनपशौकपशोगयोरम्भविकारत्वेन प्रयो
क्रम्य। न च लिङ्गैकपशौकप्रयोगात्र सम्भोऽहं द्विबहुपशौक-

व्यासज्यवृत्तित्वकल्पने प्रमाणाभावादन्यथासर्वप्राणिसाधारण्येनैक-चक्षुःकल्पनापत्तावस्मादिदृष्टसिद्धापत्तेः प्रत्यधिष्ठानं नानैवेन्द्रियम्। तच प्रमाणान्तरवगात्तिजमादौत्यन्यदेतत्। तत्र पक्षोन्यायेनैकत्वस्य प्रत्येकव्यक्त्यभिप्रायेणाऽप्युपपत्तेरनूह एव।

वस्तुतस्तु गोलकाधिष्ठितस्य सूर्य्यगमनासम्भवात् ततो निर्गत स्यैवाऽत्र चक्षु पदेनाभिधानम्। न च पर्य्यग्निकरणोत्तरमेवाभिप्रोक्षणात् तदानीच चक्षुरादीनां गोलकस्थत्वात् निर्गमनमिति वाच्यम् पतनान्तरभाविसम्पातनकालस्यैव पूर्व्वमुच्यमानत्वेन बाधकाभावात्। अतश्च निर्गतस्य चक्षुषः प्रदीपप्रभावदनेकत्वाऽपि समर्पणैकीभावात् प्रकृतावेकवचनं निर्व्वाह्यम्। ततश्च विकृतावपि तथैव सम्भवादनूहः। न हि निर्गतचक्षुषा प्रदीपानामिव भिन्नदेशावस्थानस्यैवकल्पनानैकीभावः। एकगोलकनिर्गमने तत्पुरःप्रदेशावस्थितघटादिर्गोलकान्तर-स्थितचक्षुषा दर्शनेन निर्गतचक्षुषो विस्फारकल्पनादेकीभावोपपत्तेः। अत्र च तैजसत्वादिवचक्षुष्ट्वादिकमपि अवयवावयविवृत्तिजाति। तेन तत्तद्गोलकस्थितनानाचक्षुर्भिरारब्धोवयव्यपि चक्षुरेवेति गौह-प्रवृत्तिः। एवं प्राणपदवाच्यप्राणेन्द्रियेऽपि बोध्यम्। शरीरे तु यद्यपि नैकीभावसम्भवस्तथाप्युच्यमानस्य कारणीभूतसूक्ष्मपृथिव्या-त्मपरपर्य्यायगगनस्य प्रत्यक्षबाधितत्वात् प्रकृतावेव स्तुत्यर्थमुच्य मानतया असमवेतार्थकत्वादनूहो द्रष्टव्यः। शरीरे ऊहं केचि-दिच्छन्ति। ९। ३। ११।

॥ एकधा ॥ तत्रैव ग्रन्थे "एकधाऽस्य त्वचमाच्छता"दिति श्रुतम्। तत्र षष्ठ्यन्तं द्वितीयान्तञ्च पदगणं द्विबहुवचनान्तेनोहितव्यमित्य

प्रत्येकव्यक्तिगतत्वेनैवैकवचनस्य प्रयोगोपपत्तेर्नोहः। नचैवमनेक-पाशकाया विकृतावपि एकवचनान्तस्य पाशमन्त्रस्योहानापत्तिः एकवचनस्य प्रत्येकव्यक्तिगतत्वेनोपपत्तेरिति वाच्यम् प्रकृतौ पाश-स्यैकत्वेन तद्गतैकवचनस्याऽपूर्व्वसाधनद्रव्यपरिच्छेदकीभूतसंख्याप्रका-शकत्वेन विकृतावपि तादृशसंख्याप्रकाशनार्थमूहावश्यम्भावात्। प्रकृते त्वेकवचनस्य प्रमाणान्तरावष्टब्धपश्वनेकत्वावरुद्धप्रयोगविषयेऽपि पाशाधिकरणन्यायेन प्रकृत्यवगतेन परिच्छेदकीभूतसंख्याप्रकाशकत्व-मिति वैषम्यम्। ८। ३। ८।

॥ अध्रिगुः ॥ एवं क्रतुपशूनां समानविधानत्वपूर्व्वपक्षे "प्रास्मा" इत्यध्रिगुप्रैषएकवचनान्तएव तेषु प्रयोक्तव्यः। पत्नीशब्दवत्। नत्वेकवचनानुरोधेनैकपशुक एव दैक्षादौ एकवचनस्य प्रत्येकव्यक्त्यभि-प्रायेण गणेऽपि स्तुत्यैव सम्भवात्। अतएव यस्य पुलिङ्गस्य श्रुत्या स्त्रीपुंगणे अमङ्गलत्वात्त्यक्तनिर्विवक्षणात्मया प्रमाणाभावात्कोपीवर्क-पुंगणस्यैव सङ्कोच इति वैषम्यम्। असमानविधानत्वसिद्धान्ते तु "प्रास्मा" इत्ययं वचने लिङ्गे च "प्रैभ्यो स्याम्नि भरतादि"त्येवमूहितव्य एव। तदेतन्नातीयस्य समानविधानत्वविचारस्य प्रयोजनमात्र-कथनम्। ८। ३। ८।

॥ प्रतिनिधौ ॥ यत्र तु अवयवसादृश्येन प्रतिनिधिनियमो यथा नीवारयुतोकादौ तत्र व्रीह्यादिशास्त्रेणैव नीवारादिगतव्रीह्यवयव-समानजातीयावयवानामपि साधनत्वावगतेः संस्कारविधीनां मुख्य-द्रव्यसमानविधानत्वस्य व्रत्नोपि व्यापितत्वात् "व्रीहीणां मेधे"ति मन्त्रोऽपि अविकारेणैव प्रवर्त्तते। नतु नीवाराणामित्येवमूहितव्यः।

धागन्देन सहकार्य्यान्तरैर्वैचित्र्येण सम्भवति। तस्य समुदितत्वकल्प विशेष्यतावच्छेदकोक्तत्वाऽपि तादृशबोधजनकत्वात्। अतश्च तादृश बोधे बाधितविषयत्वप्रतिसन्धानस्याऽपि उक्तनिर्णये सहकारि कारणता याच्यति। अधिकसामग्रीकत्वात् प्रकृतिवद्भावबाधापत्ति। अत प्राकृतसहकारिकारणमात्रेण प्रत्येकत्वविशिष्टकनिरुक्त बोधजननार्थं एकधापदस्य यावत्त्वचमभ्यास आवश्यक एव। सोऽयं अभ्यासमात्रेण प्रकृतितोऽन्यथाभावादूह इति व्यवह्रियते न तु अय वस्तुत संस्कारोहादिसाधारणोहलक्षणाक्रान्त इति धेयम्।८।३।१२।

॥ मेधपतित्वम् ॥ तत्रैव प्रैषे "उपनयत मेध्याद्गुर आशासाना मेधपतिभ्यां मेध"मिति श्रुतम्। केषाञ्चित् तु शाखिना "मेधपतये मेध"मिति। तत्र न तावच्छाखाभेदेनाऽत्र मन्त्रभेद। एकदेशवैलक्षण्येऽपि शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञानबलेन तदैक्यावगते। ततश्च तदर्थोऽप्येक एव वाच्य। तेन मेधस्य पशो पतिर्यजमानो देवता वा अथो वाच्यो न तूभय न च मेधपतित्वस्य शक्यतावच्छेदकस्यैकत्वात् तदवच्छिन्नोभयाभिधानेऽपि न दोष इति वाच्यम् तथात्वेऽपि इतरपदानां ततत्तदर्थघटितमन्त्रवाक्यार्थविषयकविलक्षणबोधद्वयजनकत्वानुपपत्ते। तथा हि यजमानपरत्वे यजमानाय यो मेध पशुर्भागसाधनत्वेनाऽऽसीत् त मेध्या भवन्त ऋत्विज दूरो यज्ञद्वारस्थोत्तानीत्करयोर्मध्य उपनयत स्वोद्दक्षिणां यजमाननिष्ठ फल वा आशासाना सन्त इत्यर्थ। देवतापक्षे देवतायै मेध पशुमाशासाना मेध्या भवन्तस्त दूर प्रति उपनयतेत्यर्थ।

एवञ्च विकल्पोऽपि फलमुखत्वाच्च दोषाय। प्रयोजनं पूर्वपक्षे सत्वे द्वयोरप्यूहो विकल्पश्च अर्थद्वयानुसन्धाने सिद्धान्ते त्वग्रिमाधिकरणे वक्ष्यते। ८। ३। १३।

॥ नियमो वा ॥ यत्र देवतात्वमेकमधिष्ठानन्तु एकं बहु वा तत्र द्विवचनान्तस्याऽधिष्ठानपरत्वात् तदनुरोधेनोहः। एकवचनान्तस्य त्वविचार एव देवतात्वस्यैकत्वात् यथा "वायव्यं श्वेतमालभेत" "वैश्वदेवं धूम्रमालभेत" "स एतान् पशूनादित्येभ्य आलभेते"त्यादौ। अत्र वायुरेकमधिष्ठानं विश्वशब्दस्य समस्तवाचित्वाद्बहवो देवा अधिष्ठानम्। यद्यपि च शब्दस्यैव देवतात्वात्तच्छब्दानां बहुत्वं। तथाऽपि देवत्वादिव्यवहारसिद्धये कल्प्यस्य स्वीकारस्याऽप्यर्थनिष्ठस्यैव कल्पनात् स्वीकारघटितसिद्धपतित्वस्याऽप्यर्थेन एवोपपत्तेरथ पदार्थाऽधिकरणे परम्परया देवतात्वाधिष्ठानपदेनोक्तम् इति तद्बहुत्वोपपत्तिः। एवमादित्यानामपि बहूनामेवाऽधिष्ठानत्वं बहुवचनानुरोधात्। न च शब्दस्य देवतात्वपक्षे बहुत्वपातदेवतात्वे प्रातिपदिकलक्ष्यस्याऽऽदित्यपदस्यैवाऽन्वयात् तस्य चैकत्वेन बहुवचनेनाप्येकत्वस्यैव लक्षणात् कथमधिष्ठानानेकत्वमिति वाच्यम् तस्यामपि लक्षणायां लक्षकान्वयवाचकपदसम्बन्धेनैव लक्षणादाश्रयरूपेऽर्थे बहुत्वोपपत्तेः। अतश्च तत्र देवताधिष्ठानसंख्यानुरोधेन द्विवचनान्तस्योहः। देवतात्वन्त्वेकम् अनेकत्वे प्रमाणाभावात्। आदित्यस्य त्वत्राऽपि न बहुत्वं विभक्त्युपात्तदेवतात्वान्वयि अपि तु बहुत्वस्याऽधिकरणसम्बन्धं गृहीत्वा तल्लक्षितैकत्वमेवेति तत्राऽपि देवतात्वैकत्वम्। अस्तु वा बहुवचनबलात् तत्र देवतात्वभेद इति न

विवादम् एकधाशब्दस्य त्वविकारोऽथ वा अभ्यासात्मको मात्र ऊह इति चिन्तायां एकधाशब्दस्य एकप्रयत्नसाध्यत्वे एकदेशकालत्वे च लौकिकप्रयोगेण नानार्थकत्वावगते प्रकृताविकल्पात्त्वचोद्देशत कालतो वा साहित्यरूपार्थोऽसम्भवेन त्वच साकल्यसम्पत्तये एकप्रयत्नसाध्यत्वस्यैव ग्राह्यत्वेऽपि विकृतावस्तुनाभ्यामवात्मनि प्रमाणाभावादेकधाशब्दनार्थान्तरभूत देशत कालतो वाऽनेकत्वच्छेदन साहित्यमेव शक्त्या प्रकाश्यत इत्यविकारादनूह । यदि तु उपकार एकभावेन पदार्थानामतिदेशात् प्रकृतौ यस्य शब्दस्य योऽर्थो निर्णीत स्तस्य तद्रूपत्वभावेनव प्राप्यवगतेर्नार्थान्तरप्रकाशनस्य प्रयोजनत्व कल्पनमुपपत्तिमदिति विभाव्यते । तदाऽस्तु एकप्रयत्नसाध्यत्वमेव विकृतावप्येकधाशब्दार्थ । तथाऽपि तु नाऽभ्यास । महद्दुपरितेनैकधाशब्देन सत्वगतैकप्रयत्नसाध्यच्छेदनकत्वस्य वक्तु शक्यत्वात् । यद्यपि च सहितानां सर्वासां त्वचामेकप्रयत्नसाध्यच्छेदनकत्व बाधितम् तथाऽपि प्रतिप्रधानं गुणावृत्तियुक्तत्वादुद्देश्यानां त्वचां साहित्याविवक्षणाच्च प्रत्येकमेव सम्भारादिवत्तासैकप्रयत्नसाध्यच्छेदनकत्वस्याव्यबाधोपपत्ते नाभ्यासोऽयमिति प्राप्त ।

प्रकृतौ यादृशनिर्णयं प्रति यादृशपदज्ञानस्य यादृशसामर्थ्यसत्त्वे फलोपधायकता विकृतावपि तादृशसामर्थ्यसत्त्व एव तादृशपदज्ञानस्य तादृशनिर्णयोपधायकत्वं वाच्यम् इतरथा प्रकृतिवद्भावानुपपत्ते । तदिह प्रकृतौ एकधाशब्देन सकलकार्यान्तरनैरपेक्ष्येणैकत्वकृत्स्ननिरूपणायावच्छेदकोक्तित्वग्विभागव्यक्त्यैकप्रयत्नसाध्यच्छेदनकत्वप्रकारकधर्म्यामिसमर्थका निर्णयोऽजनित । न चाऽसौ विकृतौ महद्दुपरितेनैक

# भाट्टदीपिका।

## नवमाध्यायः।

### चतुर्थपादः।

॥ षड्विंशति ॥ तत्रैव प्रैषे "षड्विंशतिरस्य वङ्क्रयस्तानुष्वगोच्या-वयतादिति" श्रुत तत्राऽस्य मन्त्रस्य कारणमन्त्रत्वाभावेऽपि समवेत-प्रकाशकत्वसम्भवे असमवेतार्थत्वस्याऽन्याय्यत्वादविकार एव पशुगण इति तावदनाशङ्क्य विकारोऽपि कीदृग्विध इति चिन्तायाम्—

प्रकृतिदृष्टपदान्यथात्वे प्रमाणाभावादश्रुतपदान्तरकल्पनानुपपत्ते-र्यावत् पशुगतसमस्तसंख्याप्रकाशनार्थं षड्विंशतिरस्येति पदद्वयाहृति-रेव। अतएव प्राकृतपदबाधे प्रमाणाभावान्न क्वचिदपि एकवचनोहः। "अदितिःपाशं मेधपतये मेध"मित्यादावपि अभ्यासेनैव सर्वपाशादिप्र-काशनोपपत्तेः। अश्रुतद्विवचनाद्यध्याहारापेक्षया श्रुतस्यैवाऽभ्यासकल्पने लाघवाच्च। अन्यथा द्विधा त्रिधेत्येवमूहेनैव प्रकाशनोपपत्तौ एकधापद-स्याऽप्यभ्यासानापत्तेः। न च एकत्वादीनां प्रकृतावेकत्वादिनाऽनुद्दे-श्यत्वादपूर्वसाधनीभूतसंख्यात्वेन प्रकाशने च विकृतावपि पशुबहु-त्वादेरपूर्वसाधनीभूतस्य प्रकाशनार्थं बहुवचनादिप्रक्षेपावश्यम्भाव इति वाच्यम्। "आग्नेयं कृष्णग्रीवं सौम्यं बभ्रु"मित्यादौ पश्वेकत्वस्येव तत्तदपूर्वसाधनत्वेन बहुत्वस्याऽविहितत्वात् प्राजापत्यानित्यादावपि यागबहुत्वार्थमेव बहुवचनोपादानेनाऽतिदेशप्राप्तस्य पश्वेकत्वस्येव

युक्तम् । तत्राऽपि षड्विंशतिपदिके अन्यथात्वे प्रमाणाभावात् षड्विंशतो षड्विंशत इत्येवं वचनयोरूहः । संख्याप्रधानत्वाच्चास्य वाक्यस्याऽयमर्थो निर्णीयते । तथाहि । सर्वत्र द्वौ त्रय इत्यादयः संख्याशब्दाः संख्येयप्रधाना एव विंशत्यादयस्तु संख्याप्रधानाः । दृष्टार्थता च तत्प्राधान्ये अन्यूनयोः पार्श्वयोरवद्यतीति वचनात् साकल्यावगमेन तत्प्रकाशनव्यञ्जकत्वात् अतः प्रधानभूतषड्विंशति-प्रातिपदिकेनाऽन्यथाभाव । नचैवं विंशतिर्गवामितिवद्वंक्रीणां गुणत्वे वंक्रीशब्दस्य षष्ठ्यन्तत्वापत्ति । संख्याप्राधान्येऽपि "देवदत्ता-दयःषट्" "पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः" इत्यादौ लक्षणया संख्येयशब्दस्य संख्यासामानाधिकरण्यदर्शनेन वंक्रिसलक्षणया वंक्रिशब्दस्याऽपि सामानाधिकरण्योपपत्तेः ।

न च लक्षणाभियेव संख्येयवंक्रिप्राधान्ये विंशतिर्गावि इति वदिति वाच्यम् तथात्वेऽपि षड्विंशतिशब्दस्य संख्येयसामानाधिकरण्य-सम्पत्तये तल्लक्षणाङ्गीकारस्यावश्यकत्वात् । नामार्थयोः पार्ष्णिका-न्वयवेलायामपि अभेदेनैवान्वय इति नियमानङ्गीकारे तु मताऽपि वंक्रीणां समवेतत्वसम्बन्धेन संख्यायामन्वयोपपत्तेर्न लक्षणा । न वंक्रिशब्दस्य वंक्रिसलक्षणया संख्याविशेषणत्वे तस्या एकत्वेनैक-वचनापत्तिः बहुवचनस्य स्वाश्रयाश्रयसमवेतवृत्तित्वसम्बन्धेनैकत्व-लक्षणार्थत्वात् । तव मतेऽपि संख्येयप्राधान्ये षड्विंशतिरित्येक-वचनेन स्वाश्रयाश्रयसमवायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणाया आव-श्यकत्वाच्च । नचैवं विनि मताविरहः वंक्रिपदे जघन्यत्वस्यैव नियामकत्वात् अतश्च प्रधानभूतषड्विंशतिपदे अन्यथाभावा-

तदिशोदाहरण किन्त्वयिमसूत्रएव। तदेतत् पूर्व्वाधिकरणस्य प्रयोजनमात्रकथनमिति मन्तव्यम्। ८। ३। १४।

॥ अर्थान्तरे ॥ यत्र तु देवतात्वान्यनेकानि अधिष्ठान त्वेकमनेक वा तत्रैकवचनान्तस्याऽपूर्व्वो यथा "त्वाष्ट्र पात्नीवत अग्नये पावकाय पशुमालभत"। "आग्नेय कृष्णग्रीव सारस्वती मेषीवभ्रु सौम्य" इत्यादौ। अत्र त्वष्टृपत्नीवतोरग्निपावकयोश्चाधिष्ठानैकत्वेऽपि तद्धित प्रत्ययभेदाद्देवतात्वभेद। द्वितीयोदाहरण तूभयभेद। अतस्तत्र उभयोरपि मन्त्रयोस्तत्तन्मन्त्रावशेनोह। न चाऽनयोर्मन्त्रयोरर्थं द्वयपरत्वधर्मेनोऽङ्गीकारे प्रकृतौ विकृतौ वा देवतात्वतदधिष्ठान रूपार्थभेदात् समुच्चयापत्तिरिति वाच्यम् उभयोरप्युभयार्थप्रति पादकत्वेन विकल्पोपपत्ते। एकवचनान्तो हि देवतात्वे परम्परा सम्बन्धेन मेधपतित्व वदन् परम्परासम्बन्धघटकतया अधिष्ठानमप्युप स्थापयति। प्रमाणोपोसत्वादिना तदुपस्थितिस्तु मेधपतिपदादस्य त्वम। द्विवचनान्तोऽपि अधिष्ठाने मेधपतित्व वदन्स्वीकाराख्यसम्ब-न्धस्य देवतात्वाधीनत्वाद्देवतात्वमप्युपस्थापयतीति मत्यऽपि विषयता भेदे उभयोरप्युभयोपस्थापकत्वाद्विकल्पोपपत्ति।

इति खोरखड्देवविरचितायां भाट्टदीपिकायां नवमस्य तृतीयपाद।

---

गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्ते"ति । अयञ्च लिङ्गप्रक-
रणाभ्यां वङ्क्रिविशसनप्रैष एव विनियुज्यते न तु याज्यादौ अतर्थां
पर्शिकृतनाऽननाऽतिदेशप्राप्तस्याऽध्रिगोरश्वविषये वङ्क्रिप्रकाशनमात्रांशे
बाधादश्वस्याऽयं मन्त्रान्तयोऽस्तु द्विपञ्चाशदनयोर्वङ्क्रय इति समास
त्यपि प्राप्तम् ।

तत्रदमपरं वचनं "न चतुस्त्रिंशदिति ब्रूयात् षडविंशतिरित्येव
ब्रूया"दिति । तदनेन किं विधीयत इति चिन्तायां न ताव-
दत्र प्रतिषेधविधिः । स हि चतुस्त्रिंशत्पदमात्रप्रतिषेधो वा
स्यात्तद्घटकप्रतिषेधो वा । उभयथाऽपि विहितप्रतिषेधे विकल्पापत्ते-
रसम्भवः । अन्य पदार्थलक्षणापत्तिश्च तत्प्रतिषेधे च षडशीति-
रित्येव समासस्यैव प्राप्त षडविंशतिपदयुक्ताऽध्रिगुप्रैषस्याऽप्राप्तत्वेन
तस्याऽपि विधाने वाक्यभेदापत्तेश्च षडविंशतिपदेन षडशीतिपदो-
पेताध्रिगुप्रैषलक्षणया तस्याऽनुवादत्वे च लक्षणैव दोषः । अतो न
गिरागिरेतिवच्च चतुस्त्रिंशदिति निषेधानुवादः । षड्विंशतिरिति च
षडविंशतिपदमात्रस्य पाठप्राप्ते मन्त्रे दशापदवद्विधानं । तद्देव च
निषेधानुवादबलाच्चतुस्त्रिंशत्स्थानापन्नत्वं विधानबलाच्च मन्त्रान्त-
र्गतषडविंशतिपदेनाऽश्ववङ्क्रिसङ्ख्यालक्षणायामपि न दोषः ।

न चैवकारेण विधिशक्तिप्रतिबन्धात्र षडविंशतिरित्यस्य विधित्व-
मिति वाच्यम् एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावात् । "अत्र
ह्येवाऽवपन्ति त्यादौ तद्युक्तेऽपि विधिदर्शनाच्च । न चैवकारेण स्वार्थ
एव विधेयत्वापादनेन षड्विंशतिपदे विधेयत्वप्रतिबन्ध इति वाच्यम्
षडविंशतिपदस्यैव विधिसङ्गीतत्वेवकारस्यैवाऽयोगव्यावृत्तिरूपं फल-

तत्पूर्व्वसाधनत्वाच्च । अतश्च तत्प्रकाशनार्थमावृत्तिरेव श्रुतपदस्य युक्ता । न तु सूर्य्यादिपदवत् पदान्तरप्रक्षेपः । यत्तु मूले एतत्-पक्षसाधनाय षड्विंशतिसंख्या पशूभयसम्बन्धप्रधानमिदं वाक्यं प्रति-पशुभेदेन तत्सम्बन्धं प्रकाशयितुमध्यवसनीयमिति युक्तिरुपन्यस्ता । सा सम्बन्धस्य पदार्थस्य गुणत्वेन प्राधान्यशङ्कानुपपत्तेर्वाक्यार्थरूपस्य चाऽ-साध्यत्वेन सुतरां तदनुपपत्तेः प्राधान्येऽपि च तस्य प्रतिपशूद्देशेनाऽपि प्रकाशनोपपत्तेरभ्यासे प्रमाणाभावादुपेक्षिता । अत उक्तयुक्त्यैव पदा-भ्यासः प्रसाध्य इति प्रथमः पक्षः ।

द्वितीयस्तु पशुगणे एकप्रयोगविधिपरिच्छिन्नानामनेकेषां साङ्गानां यागानां यौगपद्यावगतेरर्थप्रकाशनकार्य्यस्याऽपि यौग-पद्यावगमात् तदनुरोधेन युगपदनेकप्रकाशकमन्त्रस्याऽपेक्षितत्वात् द्विवचनसामर्थ्याच्चाऽभ्यासः । "अदितिः पाश"मित्यादौ तु गुणानु-रोधेन प्रधानप्रातिपदिकस्याऽभ्यासे प्रमाणाभावादपि नाऽसौ ऽपि तु बहुवचनाद्यूह एव ।

यद्यपि च बहुत्वं न कस्यचिदङ्गं तथाऽपि पाशप्रातिपदिकेना-ऽनेकपाशोपादाने साधुत्वार्थं तत्प्रक्षेपस्यैवाऽपेक्षितत्वात् । सर्वैक-वचनान्तपदप्रयोगवत् प्रत्येकमप्यभिप्रायेणैकवचनप्रयोगे तस्य पाशैकत्वानेकत्वसन्देहजनकतया निर्णायकत्वाभावात् । एकनियमाव प्राधान्ये नाऽप्रयोज्यत्वात्तथा "द्विधाम्नयोर्द्धवे"त्याद्युदाहारेऽपि पशुकत्वेऽपि प्रयोजयमाद्यप्रकाशकतया निर्णायकत्वा-भावादन्यथा एकधापदेऽभ्यासाङ्गीकारात् । प्रकृते [illegible] विवक्षि-तार्थविषयी संशयजनकत्वाभावाद्यौगपद्यसम्पत्तये ऊहाङ्गीकरणमेव

गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्ते"ति । अयञ्च लिङ्गप्रकरणाभ्यां वङ्क्रिविशसनप्रैष एव विनियुज्यते न तु याज्यादौ अतश्चा प्रदर्शिकत्वाऽननुवादत्वाऽतिदेशप्राप्तस्याऽध्रिगोरश्वविषये वङ्क्रिप्रकाशनमात्रार्थे बाधः । दृष्टस्याऽप्य मन्त्रान्तयोस्तु द्विपशावदनयोर्वैकल्प इति समान इत्यपि प्रास्तम् ।

तच्छेषपरं वचनं "न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूया"दिति । तदनेन किं विधीयत इति चिन्तायां न ताव दृष्टप्रतिषेधविधिः । स हि चतुस्त्रिंशत्पदमात्रप्रतिषेधो वा स्यात्तद्घटकप्रतिषेधो वा । उभयथाऽपि विहितप्रतिषेधे विकल्पापत्तेरसम्भव । अन्त्ये जघन्यलक्षणापत्तिश्च घटकप्रतिषेधे च षडशीतिरित्येव समासस्यैव प्राप्तं षड्विंशतिपदयुक्ताऽध्रिगुप्रैषस्याऽप्राप्तत्वेन तस्याऽपि विधाने वाक्यभेदापत्तेः षड्विंशतिपदेन षडशीतिपदोपेताध्रिगुप्रैषलक्षणया तस्याऽनुवादत्वे च लक्षणैव दोष । अतो न गिरागिरेतिवच्च चतुस्त्रिंशदिति निषेधानुवाद । षड्विंशतिरिति च षड्विंशतिपदमात्रस्य पाठप्राप्ते मन्त्रे इरापदवद्विधानं । तद्देव च निषेधानुवादबलाच्चतुस्त्रिंशत्स्थानापन्नत्वं विधानबलाच्च मन्त्रान्तर्गतषड्विंशतिपदेनाऽश्ववङ्क्रिसङ्ख्यालक्षणायामपि न दोष ।

न चैवकारेण विधिशक्तिप्रतिबन्धात् षड्विंशतिरित्यस्य विधित्वमिति वाच्यम् एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावात् । "यत्र क्वचाऽऽवपन्ती"त्यादौ तद्युक्तेऽपि विधिदर्शनाच्च । न चैवकारेण स्वार्थ एव विधेयत्वापादनेन षड्विंशतिपदे निधेयत्वप्रतिबन्ध इति वाच्यम् षड्विंशतिपदस्यैव विधिमङ्गीकृत्यैवकारस्यैवाऽयोगव्यावृत्तिरूप फल

विंशतिरश्चोपवर्जितनषड्योतिरष्टोपेताध्रिगुप्रैषनलक्षणया तस्यैव प्रतिप्रसव । साऽपि न विधेय । एवकारेणाऽनुवाद्यत्वावगमात् । तत्प्राप्तिश्चेत्थम् । "न चतुस्त्रिंश"दित्यत्र वैशेषिकमन्त्रप्रतिषेधविधि । चतुस्त्रिंशत्पदेन लक्षणया तदादिसकलमन्त्राभिधानात् । पदमात्र-प्रतिषेधे तत्र षड्विंशतिपदस्याभावेन "षड्विंशतिरित्येव ब्रूया" दित्यस्याऽनुवादत्वानुपपत्ते । अतो वैशेषिकमन्त्रप्रतिषेधपक्षाऽप्य नतश्च "न तौ पशौ करोति"तिवद्विहितप्रतिषिद्धत्वाद्विकल्प । अभाव पक्षे च अतिदेशप्राप्तस्य षड्योतिपदोपेतस्याऽध्रिगोरेव न्यायेन प्राप्तत्वात् षड्विंशतिरित्येवेत्यनुवाद ।

आश्वलायनमते तु "षड्विंशति षड्विंशतिश्चतुस्त्रिंशदेषा वङ्क्रय" इत्येवमाकारकाऽध्रिगुप्रैषस्य षड्विंशतिपदेन लक्षणासत्त्वेऽप्ययमनुवाद । एतेनैवकारयुक्तवाक्येनोक्तविधाऽध्रिगुप्रैषस्यैव प्रतिप्रसविधि । वाचनिकेन चाऽध्रिगुप्रैषेण पाठप्राप्तस्य वैशेषिकमन्त्रस्य बाधात् चतुस्त्रिंशदिति निषेधानित्यानुवाद । वैशेषिकमन्त्रस्य चाग्निष्टोमादौ विनियोग च वैयर्थ्यमपि । एवञ्च विकल्पोऽपि नाऽष्टदोषदुष्टो भविष्यति । एवकारस्याऽयोगव्यावृत्तेरन्ययोगव्यावृत्तेर्वाऽनुवादो भविष्यतीत्यपास्त । निषेधपूर्वकैवकारस्थले एवकारसम्बन्धस्याऽनुवाद्यत्वप्रतीते । तादृशस्थले पञ्चकृत्वादिवदेवकारस्याऽपि सम्बन्धविधिप्रतिबन्धकत्वात् ।

अतएव उपवासमात्रस्योक्ते उपवासेनैव कुरु न तु प्रवासं गच्छेत्यत्र प्रवासनिवृत्तिरेव विधेया न तूपवास इत्यनुभवसिद्धम् । यत्तु निषेधपूर्वकता तथाऽनुभववनादेवकारसम्बन्धस्याऽपि विधाने

मादाय चतुस्त्रिंशत्पदव्यावृत्त्याऽन्ययोगव्यावृत्तिरूप फलमादायैव वाऽनुवादत्वोपपत्तेः। अतश्चाश्वे "षड्विंशतिर्वाजिनो देवबन्धो"रिति मन्त्रे इतरयोस्तु प्राकृत एव समासेनेति प्राप्ते।

न तावदेवकारोऽयोगव्यावृत्त्यर्थकतयाऽन्ययोगव्यावृत्त्यर्थकतया वाऽनुवादो वैयर्थ्यापत्तेः, पदमात्रेण स्वात्यनुपपत्तेश्च अन्ययोगव्यावृत्त्यनुवादस्य निषेधेनैव सिद्धेः पुनरनेन करणे सुतरां वैयर्थ्याच्च। नित्यादिविधिवेवकारार्थविधौ चाऽयोगव्यावृत्तस्तावत् षड्विंशतिपदस्य पक्षेऽप्यप्राप्तत्वादयोगव्याऽप्रसक्तत्वेन विधानासम्भवः। षड्विंशतिपदविधानावश्यकत्वे ततएव तस्या प्राप्तत्वाच्च। अतएव नाऽन्यनिवृत्ते तद्विधाने विकल्पस्याऽनवश्यकत्वाच्च। अतएवा"ऽग्न्याधेवाऽवपत्नी"त्यादावेवकारार्थविधौ "न तौ पशौ करोती"ति तद्धि फल्यापत्तिरित्युक्तं कौस्तुभे।

वस्तुतस्तु निषेधसमभिव्याहृतैवकारस्थले प्रतिप्रसवरूपता एवाविषयस्याऽनुवाद्यत्वेन वाऽनुभवसिद्धा। शब्दशक्तिवैचित्र्यस्याऽनुभवसिद्धस्याऽपह्नोतुमशक्यत्वात्। न च तथापि के मन्त्रे षड्विंशतिपदस्य प्रतिप्रसवः सम्भवति। न च प्राकृतएवाऽध्रिगौ षड्योनिपदप्राप्तौ तस्य प्रतिप्रसवः तथात्वे "न चतुस्त्रिंश"दिति निषेधानुवादानुपपत्तेः। वैशेषिकमन्त्रेणाऽश्वाथ प्राकृताऽध्रिगुबाधेन तत्र षड्विंशतिपदप्रतिप्रसवानुपपत्तेश्च। तूपरगोमृगयोर्द्वितीयन्नान्तपदप्राप्तौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तिस्तदवस्थैव।

आश्वलायनमताङ्गीकारे तु तत्र षड्विंशतिपदस्यैव सत्त्वात् प्रतिप्रसवानुपपत्तिः। अतएवकारस्यतात्पर्यग्राहकानुरोधेन षड्-

रकारदर्शनाल्लोकेऽपि च रोमाणि लोमानीत्यादौ रलघटितपदयोः समानप्रवृत्तिकत्वदर्शनादुरूकपदेनोलूकाभिधानं ततश्चोलूकवदुखावनिष्ठु मा च्छिदतेति मन्त्रार्थः । ततश्च वपानेकत्वनादूरूकाशब्दस्योहः इति प्राप्ते ।

न तावद्वनिष्ठो मन्त्रेण लवनं निषिध्यते । हृदयादिवत्तस्य प्रविष्टेन लवनस्याऽवश्यकत्वात् । नाऽपि उलूकमाहृष्यवधि लवनकाले निषिध्यते अदृष्टार्थत्वापत्तेः । अत उरूकाशब्देनाऽवयव योगेन वपाभिधानमेव वपोद्धरणकाले वपा मन्यमाना भ्रान्त्या वनिष्ठु मा च्छिद्यतामित्यर्थः । वनिष्ठोर्वपायोगोत्तरकाले लवितव्यत्वात् अत एव पूर्वलवनप्रतिषेधवचनं दृष्टार्थं भवति । अवयवयोगश्चोरु शब्दो विस्तीर्णवाची दीर्घश्छान्दसः । काशब्दो मेदोवाची नामैक देशे नामग्रहणात् काशब्दोऽपि तद्वचन एव ततश्च पदद्वयमिदं समासो वा विस्तीर्णमेदोवपाख्यस्य तदयं । न च रूढ्या योगबाधः । रेफ घटितस्य पदस्योलूकेऽपि रूढ्यभावात् । अतश्च वपानेकत्वे उरूणिका वेति पदद्वयपक्षे उरूकाणीति समासपक्षे च ऊहः कार्यः । ८ । ४ । ३ ।

॥ प्रशसा ॥ तत्रैव पशौ "प्रशसा बाहू" इति श्रुतं अत्र सगुतादिति मनुषज्यते । तत्र प्रशसत्वेन किं कारणीभूतं नाम उच्यते उत प्रशस्तत्वमिति चिन्तायां प्रशसायामदृष्टार्थत्वापत्तेः प्रशसेति छेदो यान्तौ अकारलोपेन छत्वेन च शासवाचिशासशब्दस्यापि वैशसमाच क्षते इत्यादिलिङ्गादभिवचनं । ततश्चासिना खड्गेन बाहू छिन्द तेति प्रैषार्थः । यद्यपि च स्वधितिरेव पशुप्रकरणे सामान्यतश्छेदने विहितस्तथाऽपि बाहुच्छेदने मान्त्रवर्णिकोऽसिविधिरनेन न विरु ध्यते । अतश्चाऽश्वमेधे "शतं पाजताहविरतच्छवीमयो भवन्ती"ति

मादाय चतुर्षि शतुपदस्याहृत्याऽन्ययोगव्यावृत्तिरूप फलमादा यैव वाऽनुवादलोपपत्तेः । अतयाक्ने "षड्विंशतिर्वाजिनो देवबन्धो" रिति मन्त्र इतरयोस्तु प्राकृत एव समासेनेति प्राप्ते ।

न तावदन्त्यैवकारोऽयोगव्यावृत्त्यर्थकतयाऽन्ययोगव्यावृत्त्यर्थकतया वाऽनुवादो वैयर्थ्यापत्तेः, पदमात्रेण स्तुत्यनुपपत्तेश्च अन्ययोग- व्यावृत्त्यनुवादस्य निषेधेनैव सिद्धौ पुनरनेन करणे सुतरां वैयर्थ्याच्च । नियमविधिविधेयकारार्थविधौ चाऽयोगव्यावृत्तत्वात् षड्विंशति पदस्य पञ्चोऽन्यमासलादयोगस्याऽप्रसक्तत्वेन विधानासम्भवः । षड्- विंशतिपदविधानावश्यकत्वे ततएव तस्याः प्राप्तत्वाच्च । अतएव नाऽन्यनिवृत्ते तद्विधाने विकल्पस्याऽवश्यकत्वाच्च । अतएवा"ऽत्र त्वैवाऽपरत्वौ"त्यादावेवकारार्थविधौ "न तौ पशौ करोतो"ति तद्दि रूत्यापत्तिरित्युक्तं कौस्तुभे ।

वस्तुतस्तु निषेधसमभिव्याहृतैवकारस्थले प्रतिप्रसवरूपता स्वत्रि षयस्याऽनुवाद्यस्यैव वाऽनुभवसिद्धा । शब्दशक्तिवैचित्र्यस्याऽनुभव सिद्धस्याऽपह्नोतुमशक्यत्वात् । न च वर्णेपि के मन्त्रे षड्विंशतिपदस्य प्रतिप्रसव सम्भवति । न च प्राकृतपदाऽधिगौ षडशीतिपदमासौ तस्य प्रतिप्रसव तथात्वे "न वपुष्टिरा"दिति निषेधानुवादानुप- पत्तेः । वैशेषिकमन्त्रेणाऽस्वाश्च प्राप्तत्वाऽधिगुबाधेन तत्र षड्विंशति पदप्रतिप्रसवानुपपत्तेश्च । तूपरगोमृगयोर्दिपञ्चाशत्पदमासौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तिस्तदवस्थैव ।

आश्वलायनमताङ्गीकारे तु तत्र षड्विंशतिपदस्यैव सत्त्वात् प्रतिप्रसवानुपपत्तिः । अतएवकारत्वपतात्पर्य्यग्राहकानुरोधेन षड-

न्यायत्वात् क्विप्विचौ भस्त इत्यङ्गीकृत्य शासपदस्यैव शंसेति छान्दसमित्यापाद्य प्रशसार्थत्वमुक्तम्। यदा तु महावार्त्तिककारस्यादृष्टप्रयोगाच्च सान्तधातौ क्विप्विचावित्येतदापाद्यमानस्वरानुगुण्याच्छन्दसि हिमायामित्यनुशिष्टस्य हि मायकस्य शमधातोर्लुग्विकल्पस्य कृतोयाबाकृपाव्ययणऽपि च्छान्दसत्वकल्पनात्क्षमासाधनत्वविधितिकरणकत्वावगतेर्यौगिकसम्मत शामहृद्धाविवोह्योऽनुसन्धेय ।८।४।४।

॥ श्येन ॥ तत्रैव प्रथ "श्येनमस्य वक्षः कृणुया"दिति श्रुतम्। तत्र श्येनपद इवशब्दानुषङ्गेण वक्षम उपमार्थमित्यविवादम्। इवशब्दार्थश्च सादृश्यमित्यपि। तच्च बहुतरधर्मैः सम्भवे कतिपयधर्मैरन्याय्यत्वादाकारविषयमेव। अतश्च वक्ष उद्धृत्य कर्त्तनादिना श्येनाकारता सम्पाद्य यष्टव्यमिति पक्षे विधिस्तु पशुवत् प्रकृतित्वनति प्राप्ते—

अवदानवाक्ये"ऽथ वक्षम" इति श्रवणात् तस्यैव हविष्प्रतीतेर्न कर्त्तनादिना तत्राम शक्य कल्पयितु तेन सादृश्यसम्पत्तिरयिकल्पहरणादेव जायत इति अविकेनादरेण प्रकाशयितुमेव साहश्यानुवादो दृष्टार्थत्वात्। इतरथा श्येनाकारताया मान्त्रवर्णिक्या विधाने गौरवमदृष्टार्थता चाऽपद्यते। एव "शलादापर्णीकश्यपे यासौ कवयोरुसेकपर्णाष्ठीवन्त इत्यादि"ष्वपि द्रष्टव्यम। शला शलाकि कश्यप च कच्छपाविव कवषा गतिसाधनाश्वादियानमहो सेकपर्णाकवषावपर्णाहस्तौ अष्ठीवन्तौ अस्थिमयुक्तौ। अत्र च पूर्व्वपक्ष सिद्धान्त च श्येनादीनामुपमानत्वस्याऽवश्यकत्वात् तत्रापि चेवशब्दश्रवणत सिद्धा देवदत्त इतिवद्गौणत्वाभावात् सिंह इव ते वीरा इतिवद्दसोविहद्दौ अनुाहतश्येनपदनैवोपमानमिह्रकुह एव श्येनादिपदानां न्याय

का चित् क्षतिः । यथा"अत्रह्येवाऽवपन्ती"त्यादौ। प्रकृते तु एवकार-सम्बन्धिनोऽभिगुणपस्याऽविधेयत्वात् चतुस्त्रिंशदित्येव निषेधविधिः । शास्त्रप्राप्तस्य निषेधाच्च "न तौ पशौ करोती"तिवदिहकल्प । षड्विंशतिरित्येवेत्ययं अकारणपक्षे न्यायप्राप्तानुवादः सत्प्रकरणप्रसङ्गया करणस्यैव नित्यार्थवादः । एवञ्च वैशेषिकमन्त्रस्य प्रकरणमपि न बाधितं भवति । विकल्पस्तु बहुवचनात्तपापृमन्त्रवच्च विरुध्यते ।

ननु एवमभिगुणपस्य विधेयत्वेऽपि एवकारार्थस्यैव वैशेषिकमन्त्रा-स्यात्यनिवृत्तिरूपस्य विधेयत्वोपपत्तेर्"न चतुस्त्रिंशद"त्यस्यैवाऽनुवादत्वं किं न स्यादिति वाच्यं एवमपि शास्त्रप्राप्तनिवृत्तेरविशेषेण विकल्प-स्याऽपरिहार्यत्वात् । अतएवा"त्रह्येवाऽवपन्ती"त्यादावप्राप्तपरि सङ्ख्यैवा"न्येति"ता कौस्तुभे । तत्परत्वकारस्य तु तत्रैवकारार्थविधि-मङ्गीकुर्वतस्तत्र विकल्पापत्तिस्तदवस्थैव चेत् तदनापत्तिरित्यय पर्यन्तु योगीन्दुरहरी न तु मम । न च तथाऽपि विनिगमनाविरहतादवस्थ्यम् एवकारस्याऽयोगव्यावृत्त्यन्ययोगव्यावृत्तिरूपनानार्थकतया सन्दिग्धार्थकत्वेन निःसन्दिग्धार्थकनिषेधस्यैव विधित्वाङ्गीकारात् । अत सिद्धोऽनमेधेऽध्यऽभिगुणपः ।

अत्र च सूत्रव्याख्यानुरोधेन किञ्चिद्वैलक्षण्येन च भाष्यकारेणैवा-धिकरणं वार्त्तिककारेण चाऽधिकरणद्वयमाश्रितं तत्प्रमेयमात्र-लिखनप्रवृत्तेन मयोपेक्षितम् । ८ । ४ । २ ।

॥ वनिष्टु ॥ अभिगुणपे एव "वनिष्टुमस्य मारावहिष्टोरुकं मन्य-माना" इति श्रुतं तस्योरुकपदेन किं उलूकस्याऽभिधानं किंवा वपाया इति चिन्तायां वपायामुरुकशब्दप्रयोगाभावादत्र वेदे लकारस्थाने

ऽसिवद्वृत्स्य विधानात् तदनुरोधेनोह इति याज्ञ भाष्यकारादिभिरेव समाहित प्रत्यक्षविहितस्वधितिमन्त्र मान्त्रवर्णिकग्रासविधिकल्पनाया गौरवात् प्रग्रासपद प्रशस्तत्वपरमेवेति तन्नु स्वयमेव "इम पयाजानिहाग्रासमाहरे"ति वाक्यस्य लिखितत्वाच्छासस्याऽपि पशौ विहितत्वेनोपेक्षितम ।

वस्तुतस्तु बौधायनादिसकलकल्पपर्यालोचनया ग्रासपदस्य स्वधितावपि शक्तत्वग्रमादाद्वृच्छेदनेऽपि साधनतैरेव प्रसक्तेर्न मान्त्र वर्णिकद्रव्यान्तरकल्पना । यत्तु "असि वैग्रासमावदान' इति लिङ्ग तत् स्वधितेरव असितुल्यत्वेन स्तुत्यर्थ असिशब्दस्य निर्देशो स्वधितिपर्यायत्वेन पाठाद्वा ग्रासशब्दस्य स्वधितिपर्यायत्वसूचनार्थ न विरुध्यते । अतश्च ग्रासस्य बाहृच्छेदने करणत्वमस्त्वऽपि प्रग्रासेतिपदेन न तदभिधान सकारस्यात्वलोपस्य बाहुलकत्वे सम्भवति अकारलोपस्य ङसश्च च बाहुलकत्वाद्वाकारे प्रमाणाभावात् द्वितीयाद्विवचनान्तत्वाङ्गीकारेण बाहुमात्रसामानाधिकरण्ये सम्भवति वैयधिकरण्यस्याऽन्याय्यत्वाच्च । द्विवचनस्याऽकारादेशस्तु स्वतन्त्र तत्वविन्न इति न तस्य बाहुलकत्व एवञ्च शनादीपणीत्यादिमायपाठोऽपि सङ्गच्छते । अतश्च प्रग्रा पदेन प्रशस्तत्वाभिधानात् तस्य चाऽधिकत्वसूचनार्थतयाऽदृष्टार्थत्वाद्वाहुविहत्वापूह । तथाऽपि प्राकृतपदस्य बाहुद्वये छान्दसत्वाद्वाहु बहुत्वे द्विप्रग्रकार्या विकृतौ बहुवचनान्तपाठमन्त्रस्यैवाऽप्रवृत्ते स्वाधीने शब्दार्थयोरन्यथाधीन प्रशस्तान बाहूनित्यूह । पर्वपशि च प्रग्रासैरिति द्रष्टव्यम् ।

इदञ्च महाभाष्यप्यारभ्यम् कान्तधातोरिव मान्तधातोरपिसुम्न

मिद कल्पसूत्रकारसम्मतमर्थेति यद्यपीदमधिकरणे नोहविचारोप-
योगि तथाऽपि प्रासङ्गिकत्वान्न दोष । ८ । ४ । ५ ।

॥ प्रासङ्गिके ॥ अग्निहोत्रे "यस्याग्नेर्ज्योतिष्यमाने पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो हुतेऽग्निहोत्रे उद्वायेदि"ति श्रुत तत्र किमिदं प्रायश्चित्तं दर्शाद्यर्थप्रणीतस्याऽग्नेरग्निहोत्रकाले उद्वाने भवति नेति चिन्ताया—

यच्छब्दसमभिव्याहृतेन लिङा पञ्चम्या निमित्तत्वमुद्वानस्य प्रतीयते। न च तदुद्वानमात्रस्य नाशापरपर्य्यायस्य सम्भवति यत् किञ्चिन्नाशस्य सर्व्वदासत्त्वेन कादाचित्कत्वाख्यनिमित्तस्या सम्भवात्। अतो हविरार्त्तिन्यायेन प्रतियोगितासम्बन्धेनाऽग्नि र्विशेषणं। तथाऽपि चाग्नेरवयवशोनाशस्य सर्व्वदा सत्त्वादग्नि त्वावच्छिन्नजगतीतलवर्त्तिसर्व्वाग्निनाशस्य च कदाप्यसम्भवा टयं करिष्यमाणाग्निहोत्रप्रयोगोपयोग्यग्नित्वावच्छिन्नप्रतियोगि ताकनाशस्यैव प्रकरणादिना निमित्तत्वावसायादुक्तप्रयोगोपयोग्य-वयविनाश एवेदं अवश्यभाव्यमर्थाद्भेदनहोमादावपि कर्त्तव्य एव। प्रकृतप्रयोगोपयोगिकपालनाशस्यैव निमित्तत्वात् अतस्तद्देवेदं मारादुपकारकं अग्निहोत्राङ्गम्।

अस्तु वा नष्टस्याग्नेरुत्पादकाहुत्या वैमृधन्यायेन पदान्तर कल्पनयाऽस्याग्निहोत्रापेक्षिताहुतिरूपाग्न्युत्पादकत्वकल्पनया सन्नि-पत्योपकारकत्वमेव। भेदनहोमस्य दृष्टरूपकपालजनकत्वस्य बाधितत्वादारादुपकारकत्वमिति विशेष। अग्नावाऽनुत्पादन-प्रयोजनाभावादग्निहोत्रे हुते उत्सृष्टायश्चित्तस्यैवापत्तेः अहुतेऽग्नि-